**ISSN : 2229-5577** **UGC Approved JN. No.-42268**

# सागरिका
**SAGARIKA**

Quarterly Research Journal in Sanskrit (Peer Reviwed)

Vol. 49/3,4 - 50/1,2

Four Issues Every Year-June-Sep.-Dec.-March

अङ्कप्रकाशनं प्रतिवर्षम् आषाढ-आश्विन-पौष-चैत्रमासेषु



**पत्रव्यवहारसङ्केतः**

**प्रो. आनन्दप्रकाशत्रिपाठी**

अध्यक्षः, संस्कृतविभागः

डॉ. हरीसिंहगौरविश्वविद्यालयः, सागरम् 470003 (म.प्र.)

दूरभाष-फैक्स : 07582-264366

Email : sanskritsagar1946@gmail.com

**प्रकाशिका – सागरिकासमितिः**

संस्कृतविभागः, डॉ. हरीसिंहगौरविश्वविद्यालयः, सागरम् (म.प्र.)

**सदस्यताशुल्कम्**

वार्षिकम् - 100 रुप्यकाणि, आजीवनम् प्रतिव्यक्ति - 1000 रुप्यकाणि, आजीवनम् प्रतिसंस्थम् - 2000 रुप्यकाणि, प्रत्यङ्कम् - 25 रुप्यकाणि

**आवरणं शब्दसज्जा च**

**अमन प्रकाशन,** नमकमंडी, कटरा, सागर (म.प्र.)

**मोबा.** : 9826434225

# सम्पादकीयम्

इदानीं पत्रपत्रिकाणां गरीयसी काचित् पङ्क्तिर्दरीदृश्यते संस्कृतजगति तस्यां स्थितौ संस्कृतशोधपत्रिकासागरिका अग्रिमपङ्क्तौ तिष्ठति। संस्कृतसाहित्यानुसन्धानरतानां विद्वज्जनानां साहित्यविदां नव्यालेखपुरस्सरं 'गागरे' इत्यस्मिन् सागरमिव सम्पूर्यमाणेयं राष्ट्रिया संस्कृतशोधपत्रिका नैरन्तर्यं समाजोदयाय शोधान् संवितनोति। संस्कृत-शास्त्रीय-वैज्ञानिक-दार्शनिक-साहित्य- नाट्यादि-विषय-निगूढां शोधसामग्रीं विदुषां पुरतः परिवेशयन्तीयं कामपि वैश्विकीमधिमान्यतामभिभजते।

पञ्चाशदधिकवर्षेभ्यः सततप्रकाशमानायाः पत्रिकायाः अस्याः अस्मिनङ्क विविधात्मकाः शोधालेखाः सम्मिलिताः सन्ति। आगामिष्वङ्केषु परप्रकर्षसम्भावनां समाश्रित्य अपेक्ष्यते तावत् नवीना आलेखाः।

- सम्पादकः

# अनुक्रमः

# 1

# वैदिकवाङ्मये पर्यावरणचिन्तनम्

*रामसुमेरयादवः*

जगति मानवस्य जीवनं प्रकृतेः स्वस्थतयैव तिष्ठति। तस्य कृते पृथ्वी-जल-तेजोवाय्वाकाशादीनां शुद्धतायाः महत्यावश्यकता वरीवर्ति। अनियन्त्रितमौद्योगीकरणं, विशेषो विकासः, जनसंख्याविस्फोटः इत्यादिभिः पर्यावरणं प्रदूषितं भवति। पर्यावरणशब्दः परिआङ्. उपसर्गपूर्वकं आवरणार्थकं वृधातोः ल्युट् प्रत्यये सति निष्पद्यते। पर्यावरणं वायुजलस्थलादिघटकैः निर्मितं भवति। वृक्ष- वनस्पति- जन्तु- मानवादयः पर्यावरणस्य पावनं परिष्कृतं पुष्करतीर्थमिव विलसिताः वर्तन्ते। अनियोजितविकासः, वृक्षोच्छेदनं, पर्वतभेदनं, यज्ञविस्मरणं, अपशिष्टपदार्थानां मलादीनाञ्च नदीषु प्रक्षेपणं इत्यादीनि प्रदूषणस्य कारणानि विद्यन्ते। अतः निगदितुं शक्यते जीवनस्यामृतम् अद्वितीयं पर्यावणं, यस्मिन् सर्वे जीवाः निवसन्ति न केवलं मानवानां कृतेऽपितु समेषां जीवानां औषधीनाञ्च कृते महत्त्वपूर्णमस्ति। इदं हि पर्यावरणं जीवनभूतमेव वर्तते। किञ्चिद् वर्षेभ्यः पूर्वं ब्राजीलदेशस्य राजधान्यां रियो-महानगरे विश्वस्य वैज्ञानिकानां मध्ये पर्यावरणमवलम्ब्या-न्ताराष्ट्रियसम्मेलनं जातम्। तस्मिन् सम्मेलने विज्ञापितं वैज्ञानिकैः यत् पर्यावरणप्रदूषणात् सप्ततिसहस्राधिकैकलक्षानां पादपानां, षष्टिसहस्राणां पशूनां, प्रजातयः समाप्तिं गताः। समेषां वैज्ञानिकानां मतमासीत् यत् प्रकृतेः जनानां हस्तक्षेपेण सन्तुलनं विनाशतां गतम्। एतदर्थं मानवः एव दोषभाक् वर्तते।

वेदेषु पर्यावरणस्य कृते ऋषयः मुनयः जागरूकाः प्रबुद्धाश्च सचेतारश्च दृश्यन्ते। वायु-जल-भूमि-पादपादयः पर्यावरणस्यैवाङ्गानि विद्यन्ते। विशुद्धेन पर्यावरणेन प्राणीनामायुः शताधिकमपि भवितुमर्हति। ऋग्वेदस्य दशमे मण्डले-

**वातु आ वातु भेषजं शभुं मयोभु नो हृदे। प्राण आयुंषि तारिषत्।।**[1]

अर्थात् वायुः अस्मभ्यं ओषधिं प्रददातु यत् आरोग्यकरं शान्तिकरं भवतु। वायुः आयुं सम्वर्धयतु। मन्त्रेऽस्मिन् वायोः महत्त्वं प्रतिपादितम्। वायुरेवाद्यशक्तिः वायुना विना मानवजीवनं कथं कथमपि सम्भवं न प्रतीयते।

**यददो वात ते गृहे मृतस्य निधिर्हितः ततो नो देहि जीवसे।**[2]

अर्थात् हे देव! यत् तव गृहे निधिः वर्तते। तदेव अस्मभ्यं प्रददातु। अतः ऋषिः दीर्घायुष्याय प्रार्थयति। इदं तु सर्वे जानन्ति वायौ अमृतस्य भण्डारस्वरूपो वायुः ''आक्सीजन'' नाम्ना ज्ञायते। यो हि पवनः प्राणान् संरक्षति। शरीरे च उत्पन्नानां मलानां नाशं करोति। शुद्धतां च नयति। अनेनैव मानवः दीर्घं जीवति। सम्प्रति प्रदूषणत्वात् जनाः रुग्णत्वं यान्ति। ऋग्वेदे तथा अथर्ववेदे पुनः अवलोकनीयम्

**द्वाविमौ वातौ वात आ सिधोरा परावतः।**
**दक्षं ते अन्य वा वातु परान्यो वातु यद् श्वः।।**[3]
**आतु वायु माहि भेषजं वि वात षाहि गद श्वः।**
**त्वं हि विश्वभेषजो देवानामित ईयसे।।**[4]

उपर्युक्तयोः द्वयोः मन्त्रयोः प्राणापानयोः द्वयोः वाक्ययोः निर्देशः विहितः। अत्र प्राणवायुना शरीरेषु बलप्रदानाय तथा च अपानवायुना शारीरिकमलानि बहिः निष्काषितुं निगदितम्। वेदेषु वनस्पतिभिः वायुशोधनपर्यावरणशोधयोः वर्णनं बाहुल्येन प्राप्यते। इदं तु सर्वविदितं वर्तते यत् कार्बनडाईऑक्साइड वायोः प्रवर्धनात् वायुः प्रदूषितो भवति। परन्तु वनस्पतयः पादपाश्च कार्बनडाईऑक्साइड वायुं गृहीत्वा अस्मत्कृते ऑक्सीजनवायुं प्रददति। अतः वृक्षारोपणञ्च नित्यं प्रकुर्यात्। प्रदूषणनिवारणार्थं अग्निहोत्रस्य महन्महत्त्वं विद्यते। वेदाः सकलज्ञानविज्ञानानां मूलोत्सस्वरूपेण विद्यन्ते। प्रथमं हि वेदेष्वेव अग्निहोत्रस्य वर्णनं प्राप्यते। यज्ञेन प्रदूषणं दूरीभवति यज्ञ देवपूजासगतिकरणदानेषु इति भ्वादिगणीयोभयप-दीधातोः इज्यते अनेन अत्र वा नङ्प्रत्ययानन्तरं यज्ञ इति शब्दः सम्पन्नतां याति। अयमेव यज्ञः अग्निहोत्रं कथ्यते। सत्यार्थप्रकाशे महर्षिणा दयानन्देन व्याख्यायितम् - ''यज्ञ उसको कहते हैं जिसमें विद्वानों का सत्कार, यथायोग्य शिल्प, विद्यादि शुभगुणों  का दान अग्निहोत्रादि जिनमें से वायुवृष्टि जल औषधि को पवित्र करके सब जीवों को सुख पहुँचाना है। उसको मैं उत्तम समझता

हूँ।'' यजुर्वेदभाष्ये महर्षिणा यज्ञ धातोः अनुरूपमेव यज्ञः परिभाषितः ''धात्वर्थात् यज्ञार्थस्त्रिविधो भवति विद्याज्ञानधर्मानुष्ठानवृद्धानां देवानां विदुषामैहिकपार-मार्थिंसुखसम्पादानाय सत्करणम्, सम्यक् पदार्थगुणसम्मेलन विरोधज्ञानसंगतया। शिल्पविद्याप्रत्यक्षीकरणम् नित्यं विद्वत्समागमानुष्ठानं शुभविद्या- सुखधर्मादिगुणानां नित्यं दानकरणमिति अस्याः सृष्टिप्रक्रियायाः समस्तगुह्यज्ञानं यज्ञेषु आधारितं वर्तते। यज्ञ एवं लौकिकजीवनयात्रां चालयति।

सम्प्रति तु केवलां आजीविकामनुसृत्य जनाः चिन्तयन्ति परन्तु सततं चिन्तनं कुर्वन्तः आसन् ऋग्वेदे-अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्।

**होतारं रत्नधातमम्।।''**[5]

यज्ञेनैव सुखसमृद्धीनां सम्वर्धनं भवति। ज्ञानवन्तो जनाः यज्ञं परिपालयन्ति। सूत्रग्रन्थेष्वपि यज्ञस्य महत्त्वं प्रतिपादितम्। यजुर्वेदे भौतिकपर्यावरणस्य शुद्धिहेतवे यज्ञ एव प्रमुखतमो माध्यमः। यज्ञस्य भौतिकरूपं स्पष्टतया तत्र द्रष्टुं शक्यते। अग्निहोत्रेण अग्नौ परमाणौ ये गुणाः विद्यन्ते ते अत्यन्ताः सूक्ष्मा भूत्वा मेघमण्डलं यावत् विस्तीर्णाः भवन्ति। मनुष्याः यज्ञं कुर्युः। यस्मिन् यज्ञे पूर्णमा लक्ष्मी पूर्णा-आयुः अन्नादयः पदार्थाः रोगनाशश्चाथ समेषां सुखानां विस्तारः वर्तते। तद्यज्ञः मानवैः नैव त्याज्यः। अतः तेषामुद्घोषः श्रूयते- वनं आस्थापयहवम्।[6] अर्थात् वने वनस्पतीनां आपणं वृक्षारोपणञ्च कुर्यात्। वनस्पतीनां वृक्षाणां एवमेव कर्तनं भविष्यति चेत् पृथिव्यां कार्बनडाईऑक्साइड वायुः प्रवर्धतां यास्यति। यजुर्वेदे एकः ऋषि कथयति -

**''अयं हि त्वा स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय।**

**अतस्त्वं देव वनस्पते शतवल्शो वि रोह सहस्रवल्शा वि वयं रुहेम।**[7]

**तथा च- ''ओषधीः प्रतियोदध्वं पुष्पवती प्रसूवती।''**

**तथा च- अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता।**[8]

यजुर्वेद 12-79, तथा 34-4 तैरीयसंहिता (4-2, 6-2) ऋचाः वर्तन्ते येषां अर्थः यत् त्वं अश्वत्थस्याधः तिष्ठ पलाशानां च निकटे निवासस्थानं, वसतिः कार्या।

वैदिककाले जनाः ऋषयः सतर्काः सावधानाः दृश्यन्ते। वयमपि जागृयाम। वेदाः अस्मत्कृते वायु-जल-वनस्पतीनां संरक्षणार्थम् उपदिशन्ति तावत्। यज्ञेन वायुमण्डलं शुद्धीकर्तुं शक्यते।

पर्यावरण-प्रदूषण-क्षेत्राणि जलं, स्थलं, ध्वनिः, भूमिः इत्यादीनि वर्तन्ते। वैदिकवाङ्मये पर्यावरणविषयकी चिन्ता स्पष्टतरा दृश्यते। सूर्यो हि भूलोकान्तरिक्ष-प्रकाशकः विद्यते। ''चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः।

**आ प्रा द्यावा पृथिवी अन्तरिक्ष सूर्य आत्मा जगतस्तस्थुश्च''**[9]

वायो महत्त्वं प्रतिपादयता ऋग्वेदः एवं घोषयति या वो भेषजा मरुतः शुचीनि[10] वायोरनुकूलतायामेव सर्वाः वनस्पतयः स्थातुं पारयन्ति -

**सं प्रेरते अनुवातस्य विष्ठा एनं गच्छन्ति समनं न योषाः।**[11]

अस्मत् कृते पवनः सुखं वातु सूर्यः सुखं तपतु मेघश्च वृष्टिं करोतु- ओम् शं नो वातः पवतां शं नस्तपतु सूर्यः, शं न कनिक्रद्देवः पर्जन्योऽभिवर्षतु।[12] यज्ञत्त्वस्य माहात्म्यं प्रदर्शयन् यजुर्वेदः उद्घोषयति ममसस्यत इमं देव यज्ञं स्थाता, बालेधाः समिधाग्निं दुवस्यत। ततो घोषयतातिथिम् आस्मिन् हव्या जुहोतन।[13]

**अथर्ववेदे - शं नो वातः वाताः।**[14]

**यज्ञस्य कृते- अस्मभ्यं शर्मसप्रथो गवेऽश्वाय यच्छत।**[15]

जलसंरक्षणार्थ तु आपः सूक्तम् वर्तते।[16] अन्तरिक्षखननश्रोतस्- समुद्र-निर्झर- जलानि रक्षार्थं प्रार्थयन्ते - ''या आपो दिव्या उतवा स्रवन्ति खनित्रिमा उत वा याः स्वयंजाः समुद्रार्थाः या शुचयः पावकास्ताः आपो देवीरिह मामवन्तु।'' ऋग्वेदे रसपूर्णानां जलानां कृते प्रार्थना विहिता-

**''मधुश्चुतः शुचयो याः पावकास्ता आषो देवीरिह मामवन्तु।''**[17]

**जलस्य प्रदूषणं सर्वत्र निन्दितं वर्तते।**

**जलानां महिमा प्रतिपादिताश्श्चिदापो महिमा**[18]

**पर्जन्यसूक्ते अवलोकनीयम्- प्रवाता वान्ति पतयन्ति**

**विद्युत उद्रोषधीनिर्हते पिन्वते स्वः।**

निम्नांकिते मन्त्रेऽस्मिन् पेयजलस्य कामना क्रियते- ओम् शं नो देवीरभिष्टय आपो भवन्तु पीतये। शंयोरभिस्रवन्तु नः।[19] जलयुक्ते तडागे मण्डूकाः दृश्यन्ते तं तडागं परितः भेकाः वदन्ति। सरो न पूर्णमभितो वदन्तः यन्मण्डूकाः प्रावृषीणं बभूव।[20]

अथर्ववेदे पयांसि न प्रदूषणीयानि इति स्पष्टतया कथितुं वर्तते- ''मा आपः हिंसीः शुंगनो आपस्तन्वे क्षरतु''। (अथर्ववेद) ओषधिसन्दर्भे ओषधयः वर्णिताः सन्ति।

**याः फलिनी या अफला अपुष्पा याश्च पुष्पिणीः।**

**वृहस्पतिप्रसूतास्तानो मुञ्चन्त्वं हसः ऋक्।**[21]

हे रुद्र। त्वत्प्रदत्ताभिः ओषधीभिः वयं शत हेमन्तूर्न पश्येम त्वादन्ते श्रीरुद्रशतमेभिः शतं हिमा अशीम भेषजेभिः।[22] तथा ''उन्नो वीरां अर्षय भेषजेभिः।[23]

यस्यार्थः हे रुद्र! अस्माकं पुत्रान् ओषधीभिः श्रेष्ठतमान् कुरू।। वैदिक वाङ्मये पशूनां संरक्षणार्थं चर्चा बाहुल्येन प्राप्यते। इन्द्रस्य शास्त्रे अश्वाः गावः ग्रामाः रथा सन्ति।

सः जलानां नेताऽपि यस्याश्वासः प्रदिशि यस्य गावो यस्य ग्रामः यस्य विश्वे रथासः। य सूर्यं य उषसं जजान यो अपा नेता स जनास इन्द्रः।[24]

**अस्मभ्यं शर्म सप्रथो गवेश्वाम यच्छत्।**[25]

तथा च- शं नो अव द्विपदेशं चतुष्पदे।।[26] शं नः भूतं द्विपदे शं चतुष्पदे।[27] गवामादरः शोभनतरः आसीत्। मरुत्देवानां माता गौरस्ति। गोमातरौ अच्छुभ्यन्ते अञ्चिभिः[28]

प्रार्थना तत्र क्रियते- हे परमात्मन् दुग्धप्रदातारः पशवः सुखिनः स्युः। अश्वादिपशबोऽपि सुखकारकाः स्युः। ''ओम् स नः पवस्व शं गवे शं जनाय शमर्वते। शं राजन्नोषधीभ्यः।[29] गोवर्धिनीशक्तेः पशुहिंसाविरोधिनी शक्तेः कृते कामना वर्तते- ''याते उष्ट्रागो ओपशघृणे पशुसाधनी। तस्यास्ते सुम्ननीमहे।[30] तथा उतनो गोषणि धिममश्वसां वाजसामुत नृवत्कृणुहि वीतये।[31]

पृथिव्याः शुद्धीकरणार्थं अथर्ववेदे स्पष्टगिरा निगदितम्। ''पृथिवी सा नो भूमिः प्राणमायुर्दधातु।

जरदष्टिं या पृथिवीकृणोतु।(अथर्ववेद) अस्मिन् मन्त्रे गृहाणां स्थितिविषये अथर्ववेदे कथितमस्ति यद् गृहाणि प्रदूषणमुक्तानि स्युः। जलसमीपे, जलमध्ये, जलेनावृते स्थले गृहं स्यात्। दूर्वायुक्तं स्यात् पुष्पाणि च स्युः।

**''ते अयने दूर्वारोहन्तु पुष्पिणी। पुण्डरीकहृदः मध्ये गृहस्थितः।''**

मानवाना पशूनां कृते च मंगलकामनाः क्रियन्ते। यजुर्वेदे- शं नो अस्तु द्विपदे शं चतुष्पदे।[32] शान्तिप्रार्थना कियती सुन्दरी वरीवर्ति- ओम् द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः वनस्पतयः शान्तिः विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वं शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि।[33]

एवं वयं पश्यामः। यत् वैदिकवाङ्मये इन्द्रवरुण-रुद्र-द्यावा-पृथिवीपर्जन्यआपः प्रभृति सूक्तानि पर्यावरणदृष्ट्या महत्त्वपूर्णानि सन्ति।

वैदिकवाङ्मये यज्ञसंस्थायाः महत्त्वमपि प्राकृतिकपर्यावरणं संवर्धते ब्राह्मणग्रन्थेषु अपि अग्निहोत्र- दर्शपूर्णमास- चतुर्मासआग्रहण- वाजपेयी सौत्रमणि निरूढपशुबन्धप्रकृतीनां यज्ञानां समुल्लेखो प्राप्यते। यज्ञेन समेषां जीवनान्यानन्ददायकानि भवितुमर्हन्ति। यजुर्वेदस्याष्टादशाध्याये एकस्मात् मन्त्रात् प्रारभ्य सप्तविशंति मन्त्रान् यावत् यज्ञस्य व्यापकता सन्दर्भे विशदं वर्णनं विद्यते प्रत्येकस्यमन्त्रस्यान्ते यज्ञेन कल्पन्ताम् इति समागतम्।

सामवेदेऽपि अनेकेषु मन्त्रेषु यज्ञपदस्य अध्वरपदस्य च प्रयोगः बहु प्राप्यतेप्रारम्भ एव त्वमग्ने यज्ञानां होता विश्वेषां हितः। देवेभिर्मानुषे जने इति यज्ञविषयकं वर्णनं प्राप्यते अग्निहोत्रेण वातावरणं शुद्धं भूत्वा प्राणिनां कृते सुखावहं भवति। यज्ञेन रोगकृमिविनाशश्च जायते।

यज्ञाग्नौ रोगहराणां सुगन्धिद्रव्याणां या आहुतिः प्रदीयते सा सूक्ष्मीभूय प्रदूषणं विनाश्य वायुमण्डलं शुद्धीकृत्य श्वासद्वारा प्राणिनां फुफ्फुसान्तर्गता भवति। तत्र गत्वा च तत्र रक्तवाहिनीषु प्रौढतां शक्तिञ्च समायोजयति। तत्रत्यामशुद्धिञ्च बहिः करोति। ऋत्वनुकूलयज्ञकर्म न केवलं शरीरिणां कृते अपितु समेषां जीवजन्तूनां कृते वनस्पतीनच कृते कल्याणाय भवति इत्यत्र समस्तविदुषां मतिः एकत्र एवाभिवर्तते।

यज्ञः वैदिकविधानेषु प्रधानं धार्मिक कार्यमस्ति। यत् सृष्टेः प्रारम्भात् सञ्चरते सृष्टे, उत्पत्तिहेतुः या एवास्ति। यत् प्रजापतिना ब्रह्मणा सम्पादितः। वेदानाम् अध्ययनेन ज्ञायते परिवारेषु शान्तिसामञ्जस्यं स्थापयितुं, प्रदूषितं वातावरणञ्च विशुद्धं कुर्तुं सुन्दरं स्वास्थ्यलाभार्थञ्च यज्ञः करणीय एव भारतीयसंस्कृतौ यज्ञस्य महिमा वर्णित। श्रीमद्भगवद्गीतायामपि यज्ञमेवाधारः स्वीकृतः संसारस्य।

**तस्मात् सर्वगतं ब्रह्मनित्यं यज्ञे प्रतिष्ठितम्।**[34]

**तथा च सहयज्ञाः प्रजाः सृष्ट्वा, पुरोवाच प्रजापतिः।**

**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्**[35]

अर्थात् सर्वव्यापी अक्षरः ब्रह्म सर्वदा यज्ञे प्रतिष्ठितम् वर्तते।

मानवजीवने यज्ञानामुपयोगितायां वैज्ञानिकतथ्यं प्रकाशितं जातम् जीवाणुशास्त्रिभिरन्वेषितम्- गोघृतस्याहुतिः गोमये अग्नौ प्रक्षेपणेन वायुमण्डलं शुद्धतां याति। गोघृतं अक्षतैः सह अग्निहोत्रे कृते चत्वारि वायवः गैस इति उत्पद्यन्ते- एथिनीन आक्साइड (ETO C2 H4 O) प्रापिलीन ऑक्साइड (PP0 C2 H2 O) फार्म एल्जिहाइड (CH2 O) तथा च वीटा प्रापियो लैक्टोन (BPLC3 H4 O) वायवः इति। अत्यन्त प्रखरतया उष्णतोर्जा भवति यत् प्रदूषितं वायुमपि शुद्धतामुपनयति। यज्ञे घृतेन सह अक्षतानां सम्मिश्रणं क्रियते अक्षतानां कवचं तैलीयं कठोरंच भवति। अत्यधिकायां मात्रायां अल्म्युनियमतत्वं भवति। अक्षतानां प्रयोगः मनसः एकाग्रतायै उचितं प्रतीयते।

पश्चिमीजर्मनी निवासिनी डॉ. मोनिकायेले मतानुसारेण यज्ञार्थं गोमयमायुर्वैदिकं भवति। शोधैः ज्ञातं भवति गोमये मेथाल, अमोनिका, फिनाल इंडाल फार्मेनिल तथा नाइट्रोजन फास्फोरिक एसिड, पोटाशादयः प्राप्यन्ते। गोमयगन्धेनैवज्वरः मलेरिया नष्टं भवति। गोमयसमिधा आम्राश्वत्थ-वटोदम्बरादीनां वृक्षाणां काष्ठानि यज्ञस्य कृतेऽतीव लाभप्रदं कल्याणकराणि च भवन्ति।

यज्ञः मानवजीवनाय नितान्तं उपयोगी वर्तते। अस्य एषां सम्पादनेन वातावरणे संशुद्धिः समायाति सात्विकतायाः संचारः च समायातिं वर्तमानयुगे उद्योगेषु विकासत्वात् प्रदूषणस्य समस्या प्रवृद्धतरा वर्तते। यज्ञानां समीचीनतया स्वस्थः समाजः भवितुमर्हति। रोगाणां प्रवर्धनेन जनधनहानिः जायते एव। अतः विधिपूर्वकं यज्ञानां सम्पादनं राष्ट्रहिताय वर्तते। समासतः कथितुं शक्यते यत् समेषां प्राणिनां हितलाभाकरी वर्तते। अर्थात् प्रदूषणविचारणे अग्निहोत्रम् एव पूर्णतया समर्थतरंभवति।

समस्तेयं सृष्टिः प्राणिनां कृते निर्मिता वर्तते। परन्तु अस्य दुरुपयोगः विनाशस्य सूचनां ददाति। नद्यः निर्झराः पर्वतमालाः स्वीकीयसौन्दर्यनिवहैः मानवमनः आह्लादयति। प्रकृतिः अस्माकं कृते सुखसाधनानि योजयति। परन्तु सम्प्रति प्रदूषणत्वात् सुरसावत् मुखं प्रसार्य निर्गलितुं स्थिता प्रतीयते। समुद्रेषु चक्रवाताः, भूकम्पादीनि, वर्षायाः प्रकोपः, वातावरणे शुष्कता, अनावृष्टिः, अतिवृष्टिश्च। वैज्ञानिका अपि समये समये विनाशस्य सूचनां सूचयन्ति। इदं तु सर्वविदितं आस्ट्रेलियादेशस्य ग्रेट वैरियर रीफ विश्वस्य अद्भुतं स्थलं वर्तते।

तस्यास्तित्वं विनाशस्य तटे एवाभिवर्तते। एकया सूचनया हिमालये सप्त-सप्तत्युत्तर द्विसहस्र कि.मी. परिमितं (2077) ग्लेशियर इति वर्तते परं द्विसप्रत्युत्तरैकोन-विशंतिशततम मादारभ्य (1972) अद्यावधि पर्यन्तं सप्तसप्तत्युत्तरचतुश्शत वर्ग (477) कि.मी. परिमितं ग्लेशियर इति गलितं वर्तते। हिमालयात् निर्गतायाः गंगायाः कृते अशुभः संकेतः। सर्वासां नदीनां अस्तित्वं विनाशतां यास्यति इति मे विश्वासः। समुद्रः नवति 90 से.मी. प्रवृद्धः भवितुमर्हति। येन बांग्लादेशस्य पंचदशप्रतिशतं स्थानं समुद्रस्यान्तसि विलीनः भविष्यति। अष्टौ वर्षेभ्य पूर्वं प्रशान्तमहासागरस्य एकं किरोवादी इत्याख्यं दीपं सम्पूर्णतया समुद्रे निमग्नं वनुवाटुतः दशसहस्रजनाः पलायनं कृत्वा बहिर्गताः। सुन्दरे वने गंगा यत्र ब्रह्मपुत्रं मिलति तत्रैव लोहाचारा एवं द्वीपमासीत् सा तदपि निमग्नतां गतम्। पुष्पाणि, हवनीयानि पदार्थतत्त्वानि, यज्ञे प्रज्वलितानि भस्मीभूतानि तत्त्वाहनं गंगायाम् उत व कस्याञ्चित् नद्यां प्रवाहीकृत्य जनाः पुण्यार्जनं मन्यन्ते यत् अनुचितं, चेत् सा सामग्री क्षेत्रेषु निक्षिपेत् तर्हि उचितं स्यात्।

प्रयागे, हरिद्वारे, वाराणस्यां, गंगातटेषु अमृतविन्दवः प्रभुणा पातिताः तेषां स्थानानां महत्त्वं प्रवर्धितम्। परन्तु अपशिष्टैः तानि स्थानानि प्रदूषितानि जनैः। पेट्रोल-डीजल धूमैः मोनो आक्साइड, सल्फर डाई आक्साइड शीशाधातुभिः हानिकारक गैस इति निर्गच्छति यानि समस्तानि मानवानां प्राणिनाञ्व कृते हानिप्रदानि वर्तन्ते। गोमुखस्य दर्शनेन प्रतीयते गंगायाः अपि अस्तित्वं समाप्तिं जिगमिषत्येव। हिमालयस्य सप्तति प्रतिशतं ग्लेशियर इति भारतं एवास्ति। गोमुखस्य ग्लेशियर इति आद्रीभूय समुद्रं प्रति नितरां याति। भारते प्रतिवर्षं विंशति कोटिटनमात्रां काष्ठानि भवननिर्माणे प्रयुज्यन्ते। एतदर्थ पञ्चदशलक्षहेक्टेयर परिमितं वनीयसम्पदः स्थानं कर्त्यते। अद्यावधि त्रिशतं प्रजातयः विनष्टाः। शोधानुसारेण ज्ञायते पञ्चसप्तति सहस्रं अकशेरुकीप्राणिनां, चत्वारिंशदुत्तरेकशतं सरीसर्पवर्गाणां विंशत्युत्तरचतुः शतं पक्षिणां विंशत्युत्तरैकशतं स्तनधारिणां प्रजातयः विलुप्ताः। (2010) द्वयधिकद्विसहस्रं यावत् सहस्रपरिमितं सन्ति विगत जीवप्रजायः विनिष्टाः भवन्ति। वैदिकसाहित्ये पर्यावणविषये वैशद्येन वर्णनं प्राप्यते समासतः कथितुं शक्यते यत् पर्यावरणस्य सुरक्षा कार्या तदैव जीवादयः अनेके जीवाः संसारे स्थाशक्यन्ते।

**सन्दर्भग्रन्थाः -**


1. *ऋग्वेदः - 10-186*
2. *ऋग्वेदः - 1-183-3*
3. *ऋग्वेदः - 10-13-23*
4. *अथर्ववेदः - 4-13-22-3*
5. *ऋग्वेदः -*
6. *ऋग्वेदः - 10-101-11*
7. *यजुर्वेदः - 5-43*
8. *ऋग्वेदः- 10-97-5*
9. *ऋग्वेदः- 1-995-1*
10. *ऋग्वेदः- 2-33-93*
11. *ऋग्वेदः-90-168-2*
12. *यजुर्वेदः-36-10*
13. *यजुर्वेदः-3-1*
14. *अथर्ववेदः*
15. *ऋग्वेदः-8-3-8*
16. *ऋग्वेदः-7-46-2*
17. *ऋग्वेदः-7-49-3, ऋग्वेदः-10-121-8*
18. *यजुर्वेदः-36*
19. *ऋग्वेदः-7-103-7*
20. *ऋग्वेदः-10-97-15*
21. *ऋग्वेदः-2-33-12*
22. *ऋग्वेदः-2-33-4*
23. *ऋग्वेदः-2-12-7*
24. *ऋग्वेदः-9-30-6*
25. *ऋग्वेदः-7-54-1*
26. *ऋग्वेदः-6-74-1*
27. *ऋग्वेदः-मारुतसूक्तं-3*
28. *सामवेदः उत्तरार्चिका 1,3*
29. *ऋग्वेदः-6-53-9*
30. *ऋग्वेदः-6-53-10*
31. *यजुर्वेदः- 39-9*
32. *यजुवेदः- 36-17*
33. *गीता 3-15*
34. *श्रीमद्भगवद्गीता- 3-10*

# 2

# वेदेषु मानवाधिकारः सामाजिकसद्भावना च

*प्रभातकुमारसिंहः*

मानवाधिकारस्य अभिप्रायः यत् मानवेन मानवः भूत्वा जन्मना योऽधिकारः प्राप्तः स एव मानवाधिकारः। किन्तु वैदिककाले तु मानवाधिकारस्य समस्या एव नासीत्। यतोहि मानवाधिकारस्यावधारणा तु द्वितीय विश्वयुद्धस्यानन्तरमागता। 1948 तमे वर्षस्य घोषणापत्रे संयुक्तराज्यसंघेन मानवाधिकारस्य घोषणा कृता। मानवानां पार्श्वे जीवनस्य, समानतायाः, स्वतंत्रतायाः, धार्मिकाधिकारस्य राजनीतिकाधिकारस्य आर्थिकाधिकारस्य अधिकाराः सन्ति। कोऽपि एतेषामधिकाराणामहरणं कर्त्तुं न शक्नोति। एते अधिकाराः एव मानवाधिकाराः सन्ति। अत्र ध्यातव्यमस्ति यत् वैदिक-ऋषीणां, मुनीनां, आर्याणां सम्मुखे अधिकारस्य समस्या नासीत्। यतोहि तत्र समष्टिवादस्यावधारणा आसीत्। वैदिकार्याः देवानां स्तुतिं व्यष्टिरूपेण कुर्वन्ति स्म किन्तु तेषां फलकामना समष्टिरूपेण आसीत्। यथा ऋग्वेदस्य प्रथममन्त्रे अग्नि देवस्य स्तुतिं कुर्वन् ऋषिः अग्निमीळे एकवचनस्य प्रयोगं करोति किन्तु अन्ते सर्वेषां कल्याणाय निवेदयति (सचस्वा नः स्वस्तये) इत्युक्त्वा बहुवचनस्य नः प्रयोगं करोति। पुनरपि चिन्तयामः यत् वेदेषु कथं मानवाधिकारस्य सामाजिकसद्भावनायाश्च विषये विवेचनं वर्तते।

वेदेषु मानवाधिकारस्य सामाजिकसद्भावनायाश्च विविधोदाहरणानि समुपलभन्ते। यदा ऋग्वेदस्य दशमे मण्डले ऋषिः कथयति-संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्। देवाभागं यथापूर्वे संजानाना उपासते।।[1]

अर्थात् वयं सहगमनं कुर्याम, सह ब्रूयाम, अस्माकं मनः समानं भूयात्। यथा प्राचीनकाले देवाः एकमतं भूत्वा स्व स्व भागं स्वीकृतवन्तः तथा एव वयं

मानवा अपि समानमनसः भूत्वा निजाधिकारं प्राप्नुयाम। अत्र ऋषिः समानतायाः अधिकारस्य विषये एव कथयति। जनानां मध्ये न कोपि विवादः आसीत् अतएव तु समानविचारस्य वर्णनं करोति। पुनरेकस्मिन्नपरे मन्त्रे वर्णयति -

**समानीव आकूतिः समाना हृदयानि वः।**

**समानमस्तु वो मनो यथा वः सुसहासति।**[2]

अत्रापि मनोहृदयसंकल्पस्य च समानतायाः विषये उपदिश्यते। अनया जनानां संगठनं भविष्यति। यजुर्वेदे ऋषिणापि प्रोक्तम्-

**रुचं नो धेहि ब्राह्मणेषु रुचं राजसु नस्कृधि।**

**रुचं विष्येषु शूद्रेष मयि धेहि रुचा रुचं।**[3]

**अस्मिन् स्थले समाजस्य सर्वेष्वंगेषु समानरुपेण**

**तेजस्वितायाः कृते याचना कृता।**

समानतायाः अधिकारस्य सर्वोत्कृष्टस्वरूपं तत्र दृश्यते यदा ऋषिः स्पष्टरूपेण कथयति यत् समाजस्य सर्वेषां जनानां मन्त्रणा मनः चित्तमपि समं भूत्वां समानेन कर्मणा अनेनैवविचारेणाशेष नियुस्येत। अनयाएवाशेष समाजस्याभ्युदयं कल्याणं सुनिश्चितं-

**समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम्।**

**समानं मन्त्रमभि मन्त्रये वः समानेन वो हविषा जुहोमि।**[4]

वैदिकऋषीणां दृष्ट्या न कोऽपि ज्येष्ठः न कोऽपि कनिष्ठः अपितु सर्वे समानाः आसन्। तदैव तु कथयति- श्रृण्वन्तु सर्वे अमृतस्य पुत्राः।[5]

**अज्येष्ठासो अकनिष्ठास एते संभ्रातरो वावृधुः सौभगाय।**

**सर्वेषां मनुष्याणामन्नजलग्रहणस्थानं समानमासीत्-**

**समानी प्रपा सह वो अन्नभागः।**[6]

अतएव तु यजुर्वेदस्य ऋषिः समाजस्य सर्वान् कुम्भकारः, रथनिर्मातरं, निशादं, लौहकर्मकारं समानरूपेण नमस्करोति-

**नमस्तक्ष्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्मकारेभ्यश्च वो नमो नमः।**
**नमो निषादेभ्यः पुंजिष्ठेभ्यश्च वो नमो नमः श्वनिभ्यो मृगयुभ्यश्च वो नमो नमः।**

**यथेमां वाचं कल्याणीमावदानि जनेभ्यः।**

**ब्रह्मराजन्याभ्यां शूद्राय चार्याय च स्वाय चारणाय च।**[7]

एतदर्थं वैदिकऋषिभिः - 'यत्र विश्वं भवत्येकनीडम्' इत्यवधारणायाः समुदघोषं कृतवन्तः। मानवाधिकारस्योत्कृष्टोदाहरणान्येतानि स्थलानि। निश्चयेनैव वैदिककाले मानवाधिकारस्य सम्यकूतया परिपालनं दृश्यते। तत्रापि न काप्येतादृशी समस्या परिलक्ष्यते।

मानवाधिकारस्यान्तर्गते सम्प्रति नारीणामधिकारस्य प्रति निखिले विश्वे जनजागरूकता विषयकाः विविधकार्यक्रमाः समायोज्यन्ते। अनेन कार्यक्रमेण समाजे नार्योऽपि शक्तिसम्पन्नाभूत्वा समाजे स्वकीयं सक्रियं योगदानं दातुं शक्नुवन्ति। अतएव समये समये नारीसशक्तिकरणवर्षस्य, दिवसस्य, संगोष्ठ्याश्चाप्यायोजनं भवति। यद्यपीदानीम् तु अशेषकार्ये स्त्रियः सोत्साहेन प्रतिभागं कुर्वन्ति। इतोऽपि वक्तुं शक्यते न केवलं प्रतिभागं कुर्वन्त्वपितु सफलतायाः सर्वोच्चशिखरे प्रायशः ताः एव सन्ति। प्रसंगवशात् चिन्तयामः यत् वैदिककाले नारीणां स्थितिः किमासीत्। वेदेषु नारीणामपि पुरुषाः इव सर्वत्र समानाधिकाराः आसन्। नार्यस्तु तस्मिन् समये वेदाध्ययनं यजनयाजनमित्यादयः कर्तुम् समर्थाः आसन्। ऋग्वेदस्य प्रथमे मण्डले वर्णितं यदिडा सरस्वती महीत्यादयः नार्यः यज्ञीयकार्येषु सोत्साहेन श्रद्धया च प्रतिभागं स्वीकुर्वन्ति स्म।

इडा सरस्वती मही बर्हिः सीदन्तु यज्ञियाः।[8]

एकस्मिन्नपरे मन्त्रे वर्णितं यत् नार्यः तु सर्वप्रथमं यज्ञीयकार्येषु प्रवेष्टव्याः-

आरोहन्तु जनयो यमिमग्रो।[9]

पुनः ऋषिः कथयति विद्वांसः सपत्नीकं यज्ञं कुर्वन्ति-

संजानाना उपासीदन् अभिज्ञु पत्नीवन्तो नमस्यं नमस्यन्।[10]

वेदेषु स्त्रीणां माहात्म वर्णयन् पत्नी एव गृहं वर्तते इति उक्तं-जायदेस्तम्।[11]

वेदेषु सामाजिकसद्भावनायाः विविधानि उदाहरणानि समुपलभ्यन्ते। यथा-

मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्।

मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे।

मित्रस्य चक्षुशा समीक्षामहे।[12]

मा नो द्विक्षत् कश्चन।[13]

पुमान पुमांसं परिपातु विश्वतः।[14]

सामाजिक सद्भावनां परिलक्ष्य यजुर्वेदस्य ऋषिः कथयति यत् निखिले ब्रह्माण्डे यत् किमपि विद्यते तत् सर्वम् ब्रह्मणा परिव्याप्तम् अत एव निःस्वार्थेन उपभोगं करणीयम् -

**ईशावास्यमिदं सर्वम् यत्किन् च जगत्यां जगत्।**
**तेन त्यक्तेन भुञ्जीथा मागृधः कस्यस्विद् धनम्।**[15]

अत्र ऋषिः साम्यं समुद्घोषयति। पुनः एकस्मिन्नपरे मन्त्रे वर्णयति-

**यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति।**
**सर्वभूतेषु चात्मानं ततो न विचिकित्सति।**[16]

अर्थात् यदा सर्वाणि भूतान्येवात्मानि परिलक्ष्यते तदा न कोपि भेदभावः सञ्जातः। सर्वे परमात्मज्योतिरेकरेवसन्ति एतादृशी भावना भवति। एतस्याः विपरीतमपि वक्तुं शक्यते यत् सर्वेषां प्राणिनां मध्येवात्मा विद्यते अतएव सर्वे एकांशीभूताः सन्ति। अतएव न कोऽपि ज्येष्ठः न कोपि कनिष्ठः। एतादृशी संकल्पना यदा मनसि समुद्भवति तदा न कोपि संशयः जायते। अस्माकं वैदिकी परम्परा एतादृशी एव वर्तते। अत्र सामाजिक सद्भावनायाः सम्यक् निदर्शनमस्ति। यजुर्वेदस्य वैदिक राष्ट्रीय गीतेऽपि सामाजिकसद्भावनायाः समावेशः दरीदृश्यते-

**आ ब्रह्मन् ब्राह्मणो ग्रह्मवर्चसी जायताम्,**
**राष्ट्रे राजन्यः शूर इषव्योतिव्याधी महारथो जायताम्**
**दोग्ध्री धेनुर्वोढानऽडवान् आशुः सप्तिः,**
**पुरन्धिर्योषा जिष्णूः रथेष्ठाः,**
**सभेयो युवास्य यजमानस्य वीरो जायतां,**
**निकामे निकामे नः पर्जन्यो वर्षतु,**
**फलवत्यो न ओषधयः पच्यन्ता, योगक्षेमो नः कल्पताम्।**

अर्थात् हे ब्रह्मन्! अस्माकं राष्ट्रे ब्राह्मणाः ब्रह्मवर्चसेनाप्लाविताः। क्षत्रियाः शूरनाशकाः महारथयश्च भवन्तु। गावः प्रचुरदुग्धप्रदायिन्यः सन्तु। वृषभाः भारवाहने समर्थाः। अश्वाः तीव्रगामी भवन्तु। स्त्रियः कुटुम्बभरणे प्रवीणाः सन्तु। रथीसैनिकाः विजयीभवन्तु। निर्भयाणां पुत्राणां प्राप्तिः भवतु। ग्रामे ग्रामे प्रचुरवृष्टिः भवतु। अस्मिन् मन्त्रे सामाजिक सद्भावनायाः दिग्दर्शनं भवति। अत्र निखिलस्य लोकहितस्य कामना कृता।

सामाजिकसद्भावनायाः कृते एव ऋषिराह -

ओम सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वीनावधीतमस्तु मा विद्विषावहै। ओम शान्तिः शान्तिः शान्तिः।

अत्र ऋषिः सम्पूर्णेऽपि समाजस्य कृते समानावसरस्य पक्षधरोस्ति। अतएव स रक्षा भोजनयश-विषये परमात्मना सार्धंमेव स्तुतिं करोति। सामाजिक सद्भावनायाः एतत् चिन्तनस्यं सर्वोत्कृष्ट मुदाहरण मस्ति।

अनेन हि दृश्यते यत् वेदेषु मानवाधिकारस्य सामाजिक सद्भावनाश्च सम्यक्तया विवेचनं कृतम्। परंच स्वजीवनेएतदनुपालनं अनुकरणं च परमावश्यकम्। तदेव सामाजिकसद्भावनायाः लक्ष्यः सम्पन्नः भविष्यति।

**सन्दर्भग्रन्थाः -**


1. *ऋग्वेदः, 10.191.2*
2. *ऋग्वेदः, 1.191.4*
3. *यजुर्वेदः, 18.48*
4. *ऋग्वेदः, 1.191.3*
5. *ऋग्वेदः, 10.13.1*
6. *अथर्ववेदः, 3.30.6*
7. *वाजसनेयि संहिता, 16.27, 28.2-3*
8. *ऋग्वेदः, 1.42.9*
9. *ऋग्वेदः, 10.18.7*
10. *ऋग्वेदः, 1.72.5*
11. *ऋग्वेदः, 3.53.94*
12. *वाजसनेयी संहिता, 36.18*
13. *अथर्ववेदः, 12.125*
14. *अथर्ववेदः, 6.75.14*
15. *यजुर्वेदः, 40.1*
16. *यजुर्वेदः, 40.6*

# 3

# शातपथानि सुभाषितानि

*किरण आर्या*

वैदिकवाङ्मये संहिताया अनन्तरं ये ग्रन्थाः सन्ति ते ब्राह्मणा-संज्ञयाभिभाष्यन्ते। ते ग्रन्था खलु कथं ब्राह्मणाभिधा इत्यत्र बहुधा व्याख्यानं भवितुमर्हति, तत्र ब्राह्मणं नाम कर्मणस्तन्मन्त्राणां च व्याख्यानग्रन्थः[1] इति तैत्तिरीयसंहिता-भाष्ये भट्टभास्करः ब्रवीति-यत् ब्राह्मणं नाम कर्म, तथा च कर्मप्रतिपादकमन्त्राणां व्याख्यानात् तेषां ग्रन्थानां नाम ब्राह्मणम् इति ।

ऋषिदयानन्दस्तु 'ब्रह्मणां वेदानामिमानि ब्राह्मणानि' इत्युक्त्वा ब्रह्म अर्थात् वेदः, तेषां व्याख्यानं यत्र ते ब्राह्मण-ग्रन्थाः (अनुभ्रमोच्छेदने) इति प्राह। भगवान् व्यासः वेदान्तदर्शने-अथातो ब्रह्मजिज्ञासा सूत्रानन्तरं ब्रह्म इति किम् प्रश्ने- 'जन्माद्यस्य यतः' सूत्रे यस्मात्-जगतः उत्पत्तिस्थितिप्रलयादिकं भवति तद् ब्रह्म इति वक्ति, तस्माद् ब्रह्मणश्च व्याख्यानं ब्राह्मणम् इत्यर्थो जायते। महाभारते च व्यासः प्रोवाच- द्वे ब्रह्मणी वेदितव्ये शब्द ब्रह्म परं च यत्[2] अर्थात् ब्रह्मद्वयं जिज्ञासितव्यम्-शब्दब्रह्म परब्रह्म च। शब्दब्रह्मणा ज्ञानराशिः वेदः, परब्रह्मणा च चेतनसत्ता ईश्वरः ज्ञेयः। अतः वेदेश्वरयोर्व्याख्यानत्वात् ते ग्रन्थाः ब्राह्मणसंज्ञका इति ज्ञायते। एवं च ब्रह्मशब्दस्य व्याख्यां नैके वैदिकग्रन्थाः अनेकैरर्थैः विभूषयन्ति, ते च सर्वेऽर्थाः ब्राह्मणशब्दे समाहिताः भवन्ति। तान् वै सर्वानपि अर्थान् स्वस्मिन् समाहृत्य ब्राह्मणग्रन्थाः निजयात्रां विदधति। तत्र शतपथ-ब्राह्मणमपि वयमवलोकयामः।

शतपथब्राह्मणं यजुर्वेदीयं विद्यते। ब्राह्मणेऽस्मिन् शतमध्यायाः सन्तीति शतपथनाम ब्राह्मणमिदं धारयति, अपि च शतशब्दः बहुशब्दस्य वाचकः। शतमिति बहुनामसु पठितम्[3] यथा यास्कः ब्रूते- बहुभक्तिवादीनि ब्राह्मणानीति।[4] पथशब्दश्च

मार्ग-निर्देशकः। अतः शतपथशब्दस्याभिप्रायो भवति यदेकैकस्मिन् पदे गर्भितान् अनन्तान् अर्थान्, अनेकान् भावान्, अनेकान् विषयान्, अनेकान् च रहस्यान् अवबोधयितुं प्रवृत्तः ग्रन्थः शतपथब्राह्मणसंज्ञकः। एतमेव भावमवलम्ब्य वयं द्रष्टुं शक्नुमः यत् मानवजीवनस्य विभिन्नानां समस्यानां समाधानाय अनेकाः सूक्तयः, सुभाषितानि शतपथे यत्र तत्र विकीर्णानि सन्ति। सूत्ररूपेण सारगर्भिता, प्राचीना शैली कियती महत्त्वपूर्णा इति तत्र ऋषिभिरुपदिष्टैः सुभाषितैः प्रकटीभवति। इह कानिचन सुभाषितानि प्रस्तूयन्ते-

1. **''न श्वः श्वमुपासीत को हि मनुष्यस्य श्वो वेद''**[5] अर्थात् - श्वः = अनागतकालः नोपासनीयः यतोहि अनागतं न कश्चित् जानाति। प्रायः सांसारिकमनुष्याः श्वस्तनोपासनायां रताः दृश्यन्ते। अद्यतनीनाः परिश्रान्ताः श्वस्तनस्य स्वर्णिम-कल्पनासु निश्चिन्तभावेन शेरते। तन्न साध्विति शतपथर्षिकथनम्। यतोहि श्वोपासने सैव स्थितिर्भविता यथा द्विरेफस्य। यथाम्बिकादत्तेन शिवराजविजये प्राह -

**रात्रिर्गमिष्यति भविष्यति सुप्रभातं, भास्वानुदेष्यति हसिष्यति पंकजश्रीः।**
**इत्थं विचिन्तयति कोशगते द्विरेफे, हा! हन्त हन्त नलिनीं गज उज्जहार।।**

पद्येऽस्मिन् अपरदिनाय प्रफुल्लमना भ्रमरः गजेन उज्झियते। सम्भवतः प्रकृतौ घटमानां घटनां दृष्ट्वा एव ऋषिः वदति- को हि मनुष्यस्य श्वो वेद इति। अतः शुभस्य शीघ्रं इति मनसि निधाय वर्तमाने उद्योगिनः स्युः। जीवनस्य सर्वासामसफलतानां मूले प्रमाद एव कारणम्, 'श्वः'उपासनमेव कारणम्, अतः न श्वः उपासीत। अत्र यास्काचार्यस्य निरुक्तवचनं द्रष्टव्यम् - न नूनमस्ति नो श्वः कस्तद्वेद यदद्भुतम्। अर्थात् मनुष्यैः कदापि श्वः नो उपासनीयः।

2. **''निरुक्तं वा एनः कनीयो भवति''**[6] **=** स्वीकृतापराधस्य फलं लघु भवति। सत्यनिष्ठया निर्भयेन चात्मानम् अपराधिनं मत्वा मानवः समाजे श्रद्धापदमवलम्बते। असत्यभाषणेन वरीवृत्तः मिथ्याप्रतिष्ठादम्भः अवसीयते। स्वीकृतापराधे सति अपराधिनं प्रति समाजोऽपि दोषप्रतिष्ठायां विरमति। पापापराधस्य गोपनीयता समाजाय अभिशाप एव। तस्मादृषेः वचनम्-निरुक्तं एनः कनीयः भवति इति दिक्।

3. **सत्यमेव देवाः, अनृतं मनुष्याः**[7], **=** संसारे रूपद्वयस्य सत्ता विराजते, सत्यस्यासत्यस्य च। मनसा वचसा कर्मणा जीवनस्यैकरूपता एव सत्यम्। सत्यस्यानारतं साधनया मानवा देवतायन्ते। तस्माद्दिव्यजनाः सत्यचिन्तनं,

सत्यभाषणं, सत्याचारं विदधति। असत्यप्रतिष्ठायाम् अखिलमपि ऐश्वर्यं प्राप्य मनुजाः न लोके प्रतिष्ठिताः भवन्ति किं च परलोके? अतः सत्यवन्त एव लोकेऽस्मिन् देवा इति ऋषिवचनम्, अनृतवादिनस्तु मनुष्याः एव सर्वे।

**4. स यः सत्यं वदति यथाग्निं समिद्धं तं घृतेनाभिषिञ्चेत् एव हैनं स उद्दीपयति तस्य भूय एव तेजो भवति श्वः श्वः श्रेयान् भवति।**[8]

अर्थात् यः मनुष्यः सत्यभाषणं करोति तस्य तेजः प्रतिपलं तथैव वर्धते यथा प्रज्वलिताग्नौ आज्याहुतिना अग्निः वर्धते तस्य सत्यवतः बलमुत्तरोत्तरं वर्धते, तद्बलस्य साम्यं न केनचित् लौकिकेन ऐश्वर्येण वा कर्तुं शक्यते। सत्यबलेन दारुणमपि दुःखं सोढुं शक्यते, सत्यवक्ता न कदाचित् न्याय्यात् पथः प्रविचलति। सत्यस्य महिमा वेदेषु अन्यशास्त्रेषु च बहुधा गीयते। सत्यं, यशः श्रीर्मयि श्रीः श्रयताम् इति भावना मनुष्येषु भवितेत्याशयः।

**5. तपसा वै लोकं जयन्ति**[9] - अर्थात् तपसा बलेनैव च मनुजाः सर्वाः शक्तीः विजयते। द्वन्द्वात्मकं सर्वंसहः मानवः तपस्वी संज्ञयाभिधीयते। जीवनयात्रयां बहूनि विघ्नानि भवन्ति तत्र तप एव तत्समाधानं दुर्गं पथो यत् कवयो वदन्ति। तपस्वी कार्यार्थी न गणयति दुःखं न च सुखम्। तपस्वी कर्मसु कौशलं धरति अतः सः न केवलमध्यात्मलोकं जयत्यपितु आधिभौतिकाधिदैविकलोकमपि जेतुं समर्थो भवति। तस्माच्च शतपथर्षिः प्रेरयति यत् तपः विधातव्यमिति।

**6. विद्वान्सो हि देवाः**[10] - देवः कः इत्युक्ते विद्वान्सः ज्ञानवन्तः एव देवाः भवन्ति । देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा[11] इति यास्कानुसारं देवशब्दे व्युत्पद्यमाने चेतनाचेतनपदार्थाः देवकोटौ विराजिताः, अत एव-मातृदेवो भव पितृदेवो भव आचार्य देवो भव। सूर्यो देवता। चन्द्रो देवता। वातो देवता। पृथिवी देवता। इति सर्वे देवपदवाच्याः। परं शतपथब्राह्मणर्षिः विद्वान्सं देवं प्रशंसति अर्थात् पृथिव्यां ये ज्ञानानुभवप्रोताः विद्वान्सस्त एव देवा दिव्यपदविभूषिताः सन्ति इति।

**7. यो वै राजा ब्राह्मणादबलीयान् स अमित्रेभ्यो स बलवान् भवति**[12] - अर्थात् वो राजा ब्राह्मणैर्युक्तः ब्राह्मणैश्च दीक्षितो भवति स एव बलवान् भवति। क्षत्रियः न कदाचित् ब्राह्मणाच्छ्रेयः, ब्राह्मणादधितिष्ठति। ब्राह्मणः सर्वदा सर्वोपरि भवति। क्षत्रियः ब्रह्मबलाधीनो भूत्वैव शक्तिशाली जायते तस्मात् यदा सकलशस्त्रशास्त्रबलप्रयोगेण विजयश्री नोपलभ्यते तदा ब्रह्मास्त्रमेवामोघं शस्त्रं मन्यते। ब्रह्मशक्तिः न केवलम् आत्मिकशक्तेः अपितु भौतिकशक्तेरपि पराकष्ठा विद्यते ब्रह्मशक्तिं विना

क्षात्रशक्तिस्तथैव यथा एकचक्ररथः। धिक्बलं क्षत्रियबलं, ब्रह्मतेजो बलं बलमिति क्षात्रबलः ब्रह्मबलाद्धीन एव। तथाहि वेदोक्तिः - यत्र ब्रह्म च क्षत्रं च सम्यञ्चौ चरतः सह। तं लोकं पुण्यं प्रज्ञेषं यत्र देवाः सहाग्निना।।[13] अर्थात् यस्मिन् राष्ट्रे ब्रह्मबलं क्षात्रबलञ्चोभौ सहैव तिष्ठतः तद्राष्ट्रं परिवर्धत इति। ब्राह्मणविहीना राजसत्ता सद्य एव नश्यति। सिंहासनेऽलंकृतः चन्द्रगुप्तः यदा राजनीतिज्ञेन ब्राह्मणेन चाणक्यगुरुणा दीक्षितो भवति तदैव स्वराष्ट्र-संरक्षणे समर्थो भवति। अतः राजकर्त्तव्य एष भवति यत् स ब्रह्मकवचं धारयेदिति।

**8. श्रमो वै पाप्मा**[14] **-** परिश्रमेण जातं कष्टं शारीरिकक्षतिं सूचयति। अतिविश्रामः अतिश्रमश्च आरोग्यनाशक एव। न च श्रमाधिक्यः विधातव्यः। श्रमेणेह शारीरिकश्रम उच्यते। एकत्र श्रमाधिक्येनाग्रिमे कार्ये बाधा जायते। सूक्तावस्यां पापशब्दस्यार्थः हानिः। श्रमः यदि कार्यहानिं करोति तर्हि कर्त्ता पाप्मा भवति। दैनिककृत्येषु सन्तुलितश्रमः, सन्तुलितनिद्रा, समये जागरणादिकमत्यावश्यकम्। न्यूनाधिक्यं परित्यज्य संयमितजीवनं पाप्माश्रयस्य दुष्परिणामेभ्यः रक्षणोपायः विद्यते।

**9. बलं वै सहः**[15] **-** सहते अभिभवति शत्रुमिति सहो बलम्[16] अर्थात् स्वबलेन शत्रोः पराभवा शक्तिः सहशब्देनाभिधीयते यश्च लोके सहजशीलता शब्देन व्यवह्रियते। सह एव बलम्। शारीरिकं बलम् आत्मिकं च। सत्यं प्रति विनयः, अन्यायं प्रति उग्रता- उभावेव सहस्-शब्दस्य बोधकौ। ''सहोऽसि सहो मयि धेहि, बलमसि बलं मयि धेहि'' इति प्रार्थना वेदेषु क्रियते। सहस्वी एव बलवान् तेजस्वी च भवति। धर्मरक्षार्थं सहिष्णुता, अधर्मविनाशाय च तेजस्वितापूर्वकं बलप्रयोगः सहसः आधारभूतम् अतः सहिष्णुः भवितव्यः, सत्यन्यायस्योद्घोषकम्ः असत्यान्यायस्य च विरोधक भवितव्य इति शातपथम्।

**10. द्राघीयो हि देवायुषम्। ह्रसीयो मनुष्यायुषम् -** अर्थात् देवानाम् आयुः द्राघीयान् भवति, देवाः (सत्यं वै देवा इति पूर्वोक्तं तथा युक्ताः देवाः) दीर्घजीविनः भवन्ति, मानवाश्च अल्पायुषः भवन्ति। अनृतं वै मनुष्या इत्यनुसारं ये पापपुण्ययोर्भागिनस्ते मनुष्याः, ते च लघ्वायुषः भवन्ति। देवानां यशस्वि जीवनं न केवलं दीर्घतरं भवत्यपितु सत्यामृतपानत्वाद्दैवं जीवनम् अमरत्वं याति। मनुजाश्च कुटिलव्यवहार कारणेन आत्मिकं मानसिकं बलं क्षीणयन्ति, परिणामस्तेऽल्पायुषि कालकवलिताः भवन्ति।

**11. विदुषः पापं च कीर्त्तयेत् नहि तस्य पाप्मा भवति -** वैदिकज्ञानानुकूलं ये पवित्राचारिणस्सन्ति ते विद्वान्सः निष्पापिनः भवन्ति। स्वाल्पज्ञत्वेन यदि कश्चित् कस्मिंश्चिद् विदुषि दोषं पश्यति तर्हि देशकालपरिस्थितिं विचार्य तद्दोषस्य यथाशक्ति समाधानं कर्त्तव्यमेव न तु तद्दोषं कीर्त्तयेत्, न च यत्र तत्र सर्वत्र ब्रूयात्, यतोहि बुधास्तु सर्वथा निर्दोषा एव भवन्ति, विद्वान्सस्तु साक्षात् देवा एव, तेषु दोषदर्शनं खल्वज्ञानां वैशिष्ट्यम्। शतपथर्षिः सावधत्ते सर्वान् यत् विदुषां निन्दा त्याज्या, तेषु पापदर्शनं पापभाजनमेव, नेज्जिह्मायन् नरकं पतेदिति।

**12. योऽन्नमिच्छति जीविष्यति सः, एवमाशंसन्ते लोके जनाः**[17] इह ऋषि अन्नेच्छां प्रति भावनां जागरयति अन्नं हि विना न प्राणिनः जीवनम्। पुरुषोऽयं बुभुक्षयैव जीवति, बुभुक्षयैव जिजीविषां व्यनक्ति। वेदेऽपि प्रार्थना विद्यते- 'वयं स्याम पतयो रयीणाम्' (यजुर्वेदे) वयं धनैश्वर्यस्य स्वामिनः स्याम। 'अयं त इध्म आत्मा'[18] मन्त्रे प्रार्थना विद्यते वयं सर्वदा अन्नेन, अन्नाद्येन - अन्नभक्षणसामर्थ्येन युक्ताः स्याम। एवं च बहुत्रान्नस्य संस्तुतिः दृश्यते, नैवान्नेन विना संसारः। नान्नं बिना हरौ भक्तिः, न दानं दीयते, न धर्मकर्मादिषु प्रवृत्तिर्जायते, किं तावद् 'अन्नं वै ब्रह्म' अन्नं तु साक्षात् ब्रह्म एव। अतः भौतिकमन्नं, आत्मिकं ब्रह्म अन्नं च य इच्छति स सर्वथा जीवति।

**13. यज्ञ उ देवानां आत्मा**[19] **-** यज्ञशब्दः 'यज देवपूजासंगतिकरणदानेषु'[20] इति यज्धातोः सिध्यति। पूजाशब्दस्य चार्थः सत्कारः। द्विविधः देवः - जडदेवः, चेतनदेवश्च। सूर्यचन्द्रपृथिवीवाय्वाकाशादि-जडदेवाः। माता-पिता-आचार्यादयः चेतनदेवाः। एतयोः जडचेतनदेवयोः सत्कारः, तान्प्रति यथायोग्यव्यवहारः यज्ञः विद्यते। विदुषां महतां जनानां साधूनां संगः सत्संगतिः, सोपि यज्ञ एव। यज्ञशब्दः न केवलं प्रज्वलिताग्नौ आहुतिकरणमपितु लौकिकाः सद्व्यवहारा अपि यज्ञशब्देनोच्यते। 'यज्ञो वै श्रेष्ठतमं कर्म' इति यज्ञकर्म श्रेष्ठतमं मन्यते यतोहि यज्ञेन लौकिकं पारलौकिकं च सर्वं श्रेष्ठत्वेन सम्पद्यते[21] याज्ञिकं जीवनं देवत्वं प्रापयति अत एव शतपथे ऋषेः कथनम्- यज्ञ एव देवानां आत्मा। यथा आत्मानं विना शरीरं निष्प्राय एव तथैव यज्ञं विना जीवनं निरर्थकमेव।

**14. अन्नाद्रा अशनाया निवर्त्तते, पानात् पिपासा, श्रियै पाप्मा, ज्योतिषस्तमः अमृतात् मृत्युः**[22] **-** मानवजीवने पंचकर्माणि अनिष्टोत्पादकानि सन्ति, धार्मिककृत्येषु च विघ्नोत्पादकानि। तथा च तानि - बुभुक्षा, पिपासा, दरिद्रता, अन्धकारः,

मृत्युभयश्च। एतैः पंचबन्धनैः बद्धः मानवः स्वलक्ष्याद् विरमति। तस्मात् ऋषिः प्राह- अन्नात् बुभुक्षा निवारणीया, जलपानात् पिपासा वारणीया। धनधान्यं संगृह्य दरिद्रता वारणीया। प्रकाशेन (ज्ञानप्रकाशेन) तमः अन्धकारः (अज्ञानान्धकारः) वारणीयः। अपि चामृतात् अर्थात् परमात्मनः आनन्दस्वरूपं प्राप्य मृत्युः वारणीयः। एतैः अन्न-जल-श्री-ज्योति- अमृताद्युपायैः बुभुक्षादिकमनिष्टं वारणीयमिति सूक्त्याशयः।

**15. नौर्ह वा एषा स्वर्ग्या यदग्निहोत्रम्**[23] जीवनयात्रां भद्रतया निर्वाहार्थं ऋषयः दैनिकं पंचयज्ञं प्रति ध्यानमाकर्षयन्ति। ब्रह्मयज्ञः देवयज्ञः पितृयज्ञः अतिथियज्ञ बलिवैश्वदेवयज्ञश्च पंचयज्ञाः। एते यज्ञाः यैः विधीयन्ते ते स्वर्गे लोके यान्ति। अग्निहोत्रमेव नौका स्वर्गप्राप्त्यर्थम्।

**16. यो वै ज्ञातोऽनूचानः स समृद्धः**[24] - लोके कः समृद्ध? प्रत्युत्तरे यः कर्मणि कुशल,ः ज्ञानवान् सदाचारी, स एव समृद्धः। सर्वाः समृद्धयः विद्वच्चरणेषु निहिता इति शतपथभावः।

**17. यो नैनं सुनोति न यजते स निर्ऋतिं गच्छति**[25] - यः जीवन-यापनाय नार्जनं करोति, न लोकहिताय यजते सः सर्वदा पराभूतः भवति। शतहस्त समाहर सहस्रहस्त संकिर इति वेदाज्ञा। अतः धन-संचयः अत्यावश्यकः, परं तत् लोकहितार्थः भवेदिति ध्यातव्यम्।

**18. यत्र वै पशून् संज्ञपयन्ति स स्वर्गः**[26] - यत्र विद्वान्सः पशुतुल्याचरणयुक्तान् जनान् विशेषज्ञानेन, उपदेशेन वा सन्मार्गं निर्दिशन्ति तदेव स्थानं स्वर्गः।

**19. शिरो वा एतद्यज्ञस्य यद्व्रतम् एतत्खलु व्रतस्य रूपं यत्सत्यम्**[27] - दृढ़संकल्पव्रतमेव यज्ञपुरुषस्य शिरः विद्यते अर्थात् यः याज्ञिकः दृढसंकल्पं धत्ते, सत्यव्रतं धत्ते सः यज्ञपुरुषः भवति तस्य सत्संकल्प एव शिरः ,प्राधान्यं कर्म इति।

एवं च वयमवलोकयामो यत् शतपथब्राह्मणे अनेकाः सूक्तयः सन्ति येऽस्मान् प्रेरयन्ति, निर्दिशन्ति सत्कर्तव्यं प्रति उपदिशन्ति च। अत्र तु स्थालीपुलाकन्यायेन काश्चन एव दर्शिताः।

**सन्दर्भग्रन्थाः -**


1. *तै.सः 1, 5.1*
2. *महा. 12.224.60*
3. *निघण्टु - 3.1*

4. *निरूक्त - 7.24*
5. *शत. 2.1.3.9*
6. *शत. 2.5.2.20*
7. *शत. 3.3.2.2*
8. *शत. 2.2.2.19*
9. *शत. 3.7.3.8*
10. *शत. 3.7.3.10*
11. *निरू. 7.15*
12. *शत. 5.4.4.15*
13. *यजु. 20.16*
14. *शत. 6.3.3.7*
15. *शत. 6.6.3.14*
16. *सायणभाष्यकण्डिका, 6.6.14*
17. *शत. 8.5.2.2*
18. *शत. 8.5.2.3*
19. *शत. 10.2.6.9*
20. *पाणिनीयधातुपाठे*
21. *यज्ञ एवं स्वर्गो लोकः*
22. *शत. 10.2.6.19*
23. *शत. 2.3.3.15*
24. *शत. 3.6.1.29*
25. *शत. 7.2.1.9*
26. *शत. 13.5.2.2*
27. *शत. 3.6.2.1*

# 4

# मनुस्मृत्यनुसारेण राजधर्मस्य वैशिष्ट्यम्

*सञ्जयकुमारः*

मानवसृष्टेराधिकालतो मनुष्याणां परस्परसहयोगापेक्षि सामाजिकजीवनं स्वभावतः प्रादुरभवत्। समाजस्य लघुतमरुपं कुटुम्बं भवति। तस्य बृहत्तमरूपं राज्यं साम्राज्यं राष्ट्रं च कल्पितम्। यथा स्वजनानां रक्षार्थं संवर्धनार्थ ंच कुटुम्बस्य स्वामी गृहपतिर्भवति तथैव राज्यस्य स्वामी राजा प्रवर्तते। यथा अर्थशास्त्रे उक्तम्- सर्वत्र चोपहतान् पितेव राजानुगृहणीयात्।[1] अस्यविषये आचार्यदण्डिनः उक्तम् - राज्यं नाम शक्तित्रयात्मकम्। शक्तयश्च मन्त्रप्रभावोत्साहाः परस्परानुगृहीताः कृत्येषु क्रमन्ते। मन्त्रेण हि विनिश्चयमोऽर्थोनाम, प्रभावेण प्रारम्भः उत्साहेन निर्वहणम्। अतः पञ्चाङ्गमन्तमूलः द्विरूप प्रभास्कन्धः चतुर्गुणोत्साहविटपः द्विसप्त प्रकृतिपत्रः षड्गुणकिसलयः शक्तिरिद्धिपुष्पफलश्च नयवनस्पतिनैतुरूपकरो। स चायमनेकाधिकरणत्वादसहायेन दुरूपसीव्यः।[2]

राज्ञेव प्रजायाः भाग्यविधाता अस्ति। राजा पवित्रात्मा भवति। स प्रजाः पुष्यति। राज्यस्य रक्षणं राज्ञः प्रथमं कर्म। आचार्येणोक्तम्- 'यथा कृषकः क्षेत्रे धान्यं रक्षति, अवाञ्छितानि तृणानि उच्छिनत्ति तद्वद्राजापि राज्यं रक्षेत्। शत्रूंश्च विनाशयेत्।'[3] आचार्यमनुर्विश्वसिति यत्सम्यक् स्वराज्यं रक्षन् राजा सुखं वर्धयति।[4] यो वा राजा स्वाभीष्टमिदं कार्यं न करोति स ध्रुवं विनश्यति। मनुः कथयति, 'यो राजा मोहवशात् स्वराज्यं न रक्षति, न न्याय्येन विधिना धनं गृह्णाति, प्रजारक्षामकृत्वैवानेकशः करं बलेनाप्नोति, स शीघ्रं राज्याद्भ्रश्यति, सबन्धुबान्धवो विनश्यति च।' अत एव राज्ञो धर्म एव भवति यदसौ राज्यं सदैव रक्षेत्। कविदण्डी स्वदशकुमारचरिते उक्तवान्- बुद्धिहीनो हि भूमृदत्युच्छ्रितोऽपि परैरध्यारुह्यमाणमात्मानं न चेतयते। न च शक्तः साध्यं साधनं वा विभज्य

वर्तितुम। अयथावृत्तश्च कर्मसु प्रतिहन्यमानः सवैः परैश्च परिभूयतो न चावज्ञातस्याज्ञा प्रभवति प्रजानां योगक्षेमराधनाय।[5] अत एव राज्ञे ज्ञानस्य महन्ति महत्त्वं वर्तते।

आचार्यमनुः चिन्तयति यद् राजा शत्रुभिश्छलादिभिर्भूयोभूयः कार्ये नष्टे कृतेऽपि राष्ट्रमुन्नतं कर्त्तुं कर्माणि वारं-वारं कुर्यात्। यतो हि नैरन्तर्येण कर्मकर्त्तारं विजयश्रीर्निश्चितं वृणुते। मनोः कथनं यद् राजा सुयोग्यान् समर्थान् नीतिरतान् कर्त्तव्यनिष्ठानधिकारिणो नियोजयति। राजैव राज्यशासनविधेरादिमः प्रणेतेति मनुः। स राजानं दण्डविधाने योग्यं मन्यते। मनोरवधारणाऽस्ति यद् दण्डो वै सर्वेषां प्राणिनां रक्षको ब्रह्मतेजोमयो धर्मपुत्रः। दण्डः समेषां प्राणिनां (स्थावरजङ्गमानां) योजकः, सर्वासां प्रजानां शासकः, सुप्तेष्वपि प्राणिषु तद्रक्षकः देव-दानव-गन्धर्व-राक्षसानां, पशु-पक्षिसरीसृपाणां सर्वेषामन्येषामपि प्राणिनां कृतेऽनुकूलां भोगव्यवस्थां विदधानः समाजे च वर्णाश्रमव्यवस्थायाः स्थापयितास्ति। समाजस्य सर्वे वर्णाः स्वधर्मपालने तत्परा भवेयुरिति द्रष्टुं राज्ञो दायित्वम्। स्वधर्मपालनं सम्यक् रूपेण कर्त्तुं प्रजा तदैवोद्यता भवति यदा सा तदधिकारप्राप्त्यै स्वकर्मकरणाय चापेक्षितं सौकर्यं प्राप्नोति। यदि सर्वो लोकः स्वया पूर्णनिष्ठया तत्परतया च सम्यग्रूपेण स्वकर्त्तव्यपालनं विदधाति तर्हि नोदेत्वव्यवस्थाया स्थितिः।

आचार्यमनुः विचारयति यद् विरल एव जनो निर्दोषः साधुश्च भवति। कौटिल्यश्च विचारयति यत्सर्वथा निर्दोषेण निर्लिप्तेन च मनुष्येण भवितुं नैव सम्भाव्यम्। कामः, क्रोधः, लोभोऽहंकारो मदो हर्षश्च लोकस्य शत्रवः। कदैते तं संप्रेर्याधर्ममाचरितुं दुराचाराय प्रवर्त्तयिष्यन्तीति निश्चयेन वक्तुं नैव शक्यम्। लोकं दुराचारणादधर्माच्च रोद्धुं दण्डस्य व्यवस्था कृतास्ति। पुरातनाचार्याणां मते दण्डं विना नास्ति कोऽप्युपायो येन सर्वे प्राणिनः सरलतया वशे स्युः। मनोर्मते राजपदस्योत्पत्तेरिदमेवौचित्यम्। तेन उक्तम् -

**तस्यार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम्।**
**ब्रह्मतेजोमयं दण्डमसृजत्पूर्वमीश्वरः।**[6]

तस्य मते राज्ञः प्रयोजनस्य सिद्‍यर्थमेवेश्वरेण प्राणिनां रक्षको ब्रह्मतेजोमय एको दण्डो निरमायि। आचार्यमनोः मते दण्डस्य महती आवश्यकता वर्तते। तेनालिखितम् -

**दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति।**
**दण्डः सप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः।।**[7]

तस्माज्ज्ञानिनो दण्डमेव धर्म प्रवदन्ति। आचार्यमनुः मते 'स एव दण्डो वस्तुतो राजा, स एव नेता शास्ता च। स एव चतुर्णामाश्रमाणां प्रतिभूस्वरूपधृक्। तदनुसारेण, 'मनुष्ये दैवी प्रवृत्तिरस्ति तद्वदासुरी प्रवृत्तिश्च वर्त्तते। अर्थान्नरो देवोऽसुरश्च दैवी वृत्तिः शुद्धतां शान्तिं च प्रयच्छति। आसुरी वृत्तिः कर्त्तव्यविमुखतां भगवतो विमुखतां च यच्छति। राज्ञः कर्मणः सिद्ध्यर्थ भगवता ब्रह्मणा चराचरार्थं दण्डः सृष्टः राज्ञे चार्पितः।' कौटिल्येनापि एष आशयः पोषितीकृतः। स लिखति, स एव दण्डोऽप्राप्तवस्तुनि प्रापयति, प्राप्तानि च रक्षति, रक्षितानि च वृद्धिं गमयति, समुचितेषु कर्मसु च तानि प्रयोक्तुं निर्दिशति। तस्मिन्नेव सर्वलोकयात्रा निर्भरा विद्यते। मनुमते तु न केवलं मनुष्या अपितु देवा, दानवा, गन्धर्वा, राक्षसाः, पशवः, पक्षिणः नागाश्च सर्वे दण्डभयेन भीताः सन्त एव नियमान् वहन्ति।

तद विचारेण यद्राजा देशं, कालं, दण्डं, शक्तिं विद्यां च यथापराधं यद्दण्डं तत्सम्यक् परीक्ष्यैव यथाशास्त्रं दण्डमपराधिभ्यो यच्छेत्। तस्यमते यत् यः सुविचार्य प्रयुक्तो दण्डः, स प्रजाः प्रसादयति। अन्यत्र स कथयति यद्दण्डाधिकारी चेत् स्वतो न्याय्येन विधिना स्वकर्म करोति तदा न प्रजा क्लिश्यति। तस्माद् दण्डप्रवर्त्तकं, सत्यवादिनं, सम्यक् समीक्षितारं, प्रबुद्धं, राजानां, मन्वादयो महर्षयो धर्मार्थकामानां वेत्तारं मन्वते। मनोर्वचनं यद् यथोचितं दण्डं विदधानो राजा धर्मार्थकामानां यथाविधि वृद्धिं लभते तदा जगति तद्यशश्चाम्भसि तैलविन्दुरिव विस्तारं याति। एवंविधो राजाऽस्मिंल्लोके परत्र च सुखमाप्नोति। योग्यः समर्थश्च नृप एव तेजोमयमेनं दण्डं धारयितुं शक्नोति। दण्डशक्तिरेव सर्वातिशायिनी भवति। तस्मात् तस्या वासो राजनि भवति। परं राज्ञापि दण्डप्रयोगकाले सम्यगालोचनीयं यदेतस्य प्रयोगो विवेकेन भवति न वा। राजा स्वविवेकेन स्वबुद्धिं सुनियम्य दण्डनियमान् व्याख्यायेत प्रयुञ्ज्येत च। न खलु नृपतिर्दण्डनियमनिर्माताऽपितु तद् व्याख्यातैव।

आचार्यमन्वनुसारेण दण्डादेव नृपतेः प्रभुसत्ता लोकोऽनुभवति, प्रभुत्वं दण्डे तिष्ठति। दण्डेनैव तेजोमयो भूत्वा नृपो लोकं शास्ति। दण्डादेव विद्रोहिणः शमं यान्ति। प्रजा च स्वकर्म सम्यक् करोति। राज्ञो दण्डस्याभिव्यक्तिस्तत्सेनां, तदनुयायिनोऽधिकारिणो तच्छत्रूंश्च दमयितुं या शक्तिः सा तस्यां भवति। यद्यपि नृपः प्रभुसत्तासम्पन्ना भवति तथापि स निरङ्कुशो भवितुं नार्हति।

सर्वातिशायिन्यामपि धर्म सा नातिशेते। धर्मः सर्वोपरि प्रतिष्ठितः धर्मविपरीतमाचरन् नृपः श्रद्धाभक्तिविश्वासपात्रतां लोकस्य नार्हति। एवंभूतं धर्मविहीनं नृपतिं लोको हन्तुं शक्नोति।

आचार्यमनुः राजानमुपदिशति यत् स नापराधिनं मर्षयेत्। कमप्यपराधिनं दण्डान्न मोचयेत्। स्वस्य मातरं, पितरं, गुरुं, स्त्रियं, पुत्रं, मित्रं, पुरोहितं वा धर्मच्युतं सन्तं वीक्ष्य राजा निःसङ्कोचं तानपि दण्डेन योजयेत् न ततो विमुच्येत। परमत्रेदं, ज्ञातव्यमस्ति यन्मनोर्मते बालो, वृद्धो, रोगी, आर्त्तः केनापि कारणेन राजनिन्दां चेत्करोति तदा तादृशा नापराधेन योज्याः तस्मात्तेषु दण्डं न धारयेत्। अपितु तान् क्षाम्येत्। अनेन क्षमापणेन राजा पुण्यवान् भवति। आर्त्तकृतानाक्षेपान् सहमानो नृपः स्वर्गे पूज्यते। किन्तु वैश्वयमदान्धस्तादृगाक्षेपानसहमानो दण्डप्रयोक्ता नरकमाप्नुते।

राज्ञः कर्त्तव्यं यद् धर्मरक्षायै दण्डस्य प्रयोगं कुर्यात्। यो दण्डो धर्मरक्षको न भूत्वा धर्मभक्षको भवति तं दण्डं प्रजा न स्वीकुरुते। एवं कुदण्डस्य प्रयोक्तुः राज्ञो विनाशः स्वयमेव भवति, जनता वा तं नाशयति। कौटिल्येनापि बृहद्धर्मस्थाधिकरणे दण्डव्यवथायां विस्तरेण विचारः कृतः। वाचस्पति गैरोला मनुते, कौटिल्येनापि दण्डव्यवस्थामधीत्य तस्य तत्त्वदर्शिन्या बुद्धे परिचयस्तु भवति, परमुद्देशस्य प्रतिपादनेऽनेनैतावान् कालो यापितो यत्तत्कल्पितनिष्कण्टक साम्राज्यस्य सत्तायामपि पाठकः सन्देग्धि, दण्डाधिक्यपूर्णव्यवस्थया च विभेति। मनुनापि सविस्तरं दण्डव्यवस्था निरूपिता। श्रीगैरोलामहोदयस्योपरिदर्शितो विचारो न मनसि घटते। यथा च सुस्पष्टमालोचितम्। प्रस्तुतविषये कौटिल्यमते राज्ञा सम्यग्दण्डवता भाव्यम्। तीक्ष्णदण्डाल्लोक उद्विजते, मृदुदण्डश्चालोच्यते। (तीक्ष्णादुद्विजते लोको मृदुश्च परिभूयते)। अपराधिनः स्वेच्छयापराधेषु भूयो भूयः प्रवृत्तिः अपराधस्य स्थलं, कालश्च सर्वमेतत्समालोच्य तस्य दैहिकीं सामजिकीं च स्थितिं समीक्ष्य, अपराधस्य लाघवं गौरवं वा सुविचार्य तदनु दण्डनीयापराधिनं दण्डेन योजयेत्।[10] सः दण्ड प्राप्त्यै दशस्थानान्यप्यवर्णयत्, तद्यथा -

**'उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम्।**
**चक्षुर्नासाच कर्णौ च धनं देहस्तयैथव च।।**[11]

अपराधानां कृते दीयमानदण्डानां च विवरणं संक्षेपतो दर्शितेनैवंविधेन प्रकारेण कर्तुं शक्यते :- लोभात्, मोहात्, भयात्, मैत्रीवशात् साक्ष्येऽसत्यभाषणाय

दण्डः। कामात्, क्रोधात्, अज्ञानात्, मौढ्याद् वाऽसत्यसाक्ष्याय दण्डः स्थापितः। अग्रेव्यवसितं असत्यसाक्ष्यदात्रे क्षत्रियाय, वैश्याय, शूद्राय च यथोक्तं दण्डं दत्वा देशात् निष्कासयेत्। किन्तु ब्राह्मणाय केवलं देशात् निष्कासयेत।[11] न्याससम्बद्धापराधेभ्योऽपि दण्डविधिर्मनुस्मृतौ विहितः। न्यासं निक्षिप्य न प्रत्ययति, न्यासमनिक्षिप्यापि तत्प्रत्यर्पणं काङ्क्षते। उभावप्येतौ चौरतुल्यदण्डार्हौ।[13] प्रतिज्ञानभङ्गापराधविचारे गवादिपशुपातकेषु तत्स्वामिषु च समयभङ्गे विवादो जायेत। एतस्यापि सम्यग्दण्डविधिः प्रवर्तितः। रथसारथिरथिषु च विवादे सति तदपराधिभ्योपि दण्डविधानां कृतम्।[14] परं दशविधेष्वपराधेषु सारथी दण्डनीयो न भवति। किमपि त्रुटिते, रथे मार्गाद्बहिर्याते, कूबरे चक्रे च भग्ने, चर्मबन्धने, वाहनग्रीवाबन्धने, प्रग्रहे च त्रुटिते, सारथिनोच्चैः स्वरेण 'अपसरत अपरसरत' इति घोषितेऽपि लोकस्य प्रमादात् जाते कष्टे च सारथी दण्डनीयो न भवति।[15]

प्रजानां शासनविषये प्रतिपदं विधिव्यवस्था दण्डनीतिश्चावश्यकी भवति अतः सम्यक् प्रजापालनार्थाय मन्त्रिमण्डलस्य अत्यावश्यकता भवति। अस्मिन् विषये आचार्यमनुः उक्तवान् -

**अपियत्सुकरं कर्म तदप्येकेन दुष्करम्।**
**विशेषतोऽसहायेन किन्तु राज्यं महोदयम्।।**
**तैः सार्धः चिन्तयेन्नित्यं सामान्यं सन्धिविग्रहम्।**
**स्थानं समुदयं गुप्तिं लब्धप्रशमनानि च।।**[16]

राजधर्मचिन्तनस्य अन्तर्गते दुर्गस्य अतिमहत्त्वं वर्तते। दुर्गे एव राज्यस्य सुशासनव्यवस्थायाः प्रतीकं मन्यते। दुर्गस्य विषये आचार्यमनुना स्वस्मृतिग्रन्थे लिखितम् -

**धन्वदुर्गं महीदुर्गमप्दुर्गं वार्क्षमेव वा**
**नृ दुर्गं गिरिदुर्गं वा समाश्रिय वसेत्पुरम्।।**[17]

आचार्यमनु स्वग्रन्थे युद्धविषये सम्यक्वर्णनं करोति। वस्तुतः युद्धस्यावश्यकता नैकविधाः सन्ति। पृथग्जनानां युद्धः स्वार्थसमीहितः स्वाभाविको वा प्रकृतेर्गुणैः क्रियमाणः वा सृष्टेरादिकालतः प्रचरति। देवा, ऋषयः, राक्षसा दानवाः सर्वे युद्धाभिमुखा आसन्। अतः आचार्यमनु स्वस्मृतिग्रन्थे युद्धस्य नियमान् प्रतिपादितवान्। यत्र राज्ञे युद्धस्य अतिमहत्त्वं वर्णनं अस्ति-

**संग्रामेष्वनिवर्तित्वं प्रजानां चैव पालनम्।**
**शुश्रूषा ब्राह्मणानां च राज्ञा श्रेयस्करं परम्।।**
**आहवेषु मियोदन्योन्यं विद्यासन्तो महीक्षितः।**
**युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः।।**[18]

महाभारतानुसारेण युद्धस्य परं शाश्वतं च कारणमस्ति भूमिप्राप्ति :-

**भूमौ हि जायते सर्वं भूमौ सर्वं प्रणश्यति।**
**भूमिः प्रतिष्ठा भूतानां भूमिरेव परायणम्।।**
**यस्य भूमिस्तस्य सर्वं जगत्स्थावरजङ्गमम्।**
**तत्राभिगृद्धा राजानो विनिघ्नन्तीतरेतरम्।।**[19]

अहंभद्रप्रतिष्ठाकारणन्महतामपि युद्धः समभवत्। महाभारते तदनु शिशुपालवधे कृष्णशिशुपालयोर्मध्ये यद् भीषणयुद्धः समारब्धः तस्य कारणमासीत् शिशुपालस्याभिमानो यदहं कृष्णादपि महत्तरो ममाग्रपूजोचिता न कृष्णस्येति। एवमेवोद्दण्डानां लोकविद्वेषकारिणां शमनाय युद्धं कृतवन्तः। मनुस्मृत्यां द्वैतविषये सम्यक् प्रतिपादितम् राजधर्मचिन्तनान्तर्गते दूतस्य वहुमहत्त्वं अस्ति। तस्य विषये आचार्यमनुः उक्तवान् -

**दूतएव हि संधत्ते भिन त्येव च संहतान्।**
**दूतस्तत्कुरुते कर्म भिद्यन्ते येन मानवाः।।**[20]

एवं प्रकारेण मनुस्मृतिग्रन्थे राजधर्मस्य विविधस्वरूपाणां वर्णनमस्ति। अस्मिन् ग्रन्थे राजामन्त्रिदूतादिनां विषये वहुविस्तारेण तस्य स्वरूपं कर्त्तव्यं च उद्घाटितम्। राजधर्म-अन्तर्गते राज्ञः कर्त्तव्यं, तस्य दुर्गव्यवस्था युद्धनीतयश्च विषये बहुप्रकारेण व्याख्या अस्ति। अतः राजधर्मस्य विविधप्रकारवर्णनेन मनुस्मृतिं राजधर्मस्य कोशः कथने न काऽपि अत्युक्तिः वर्तते।

**सन्दर्भग्रन्थाः -**


1. *अर्थशास्त्रे, 4/3/54*
2. *दशकुमारचरिते उत्तरपीठिकायां अष्टमोच्छ्वासः, पृ. 454-455*
3. *मनुस्मृति, 7/110*
4. *तत्रैव, 7/113*
5. *दशकुमारचरिते, उत्तरपीठिकायां अष्टमोच्छ्वासः, पृ. 415*

6. *मनुस्मृति, 7/14*
7. *तत्रैव, 7/18*
8. *तत्रैव, 7/16*
9. *तत्रैव, 8/335*
10. *तत्रैव, 8/126*
11. *तत्रैव, 8/125*
12. *तत्रैव, 8/380*
13. *तत्रैव, 8/160-61*
14. *तत्रैव, 8/263-64*
15. *तत्रैव, 8/263-62*
16. *तत्रैव, 6/55-56*
17. *तत्रैव, 6/60*
18. *तत्रैव, 6/88-89*
19. *महाभारते, भीष्मपर्व, 5/20-21*
20. *मनुस्मृति, 6/66*

# 5

# मनुस्मृतौ राष्ट्ररक्षणचिन्तनम्

***नौनिहालगौतमः***

वेदेषु बहुविधं ज्ञानं निबद्धमस्ति। परवर्तिशास्त्राणि वेदमेवमनुसरन्ति। परवर्तिशास्त्रेषु प्रसिद्धमस्ति धर्मशास्त्रम्। धर्मशास्त्रं स्मृतिर्वा वेदार्थमेवानुसरति। रघुवंशे महाकविः कालिदास आह- श्रुतेरिवार्थं स्मृतिरन्वगच्छत्। राजेशखरोऽपि एवं कथयति- अष्टादशैव श्रुत्यर्थस्मरणात् स्मृतयः। मनुस्तु धर्मशास्त्रमेव स्मृतिं निरूपयति-'धर्मशास्त्रं तु वै स्मृतिः'[1]

स्मृतिषु मुख्यं स्थानं भजति मनुस्मृतिः। मनुस्मृतौ यथा धर्मशास्त्रीय-विषयाः वर्णिताः सन्ति तथैव राष्ट्ररक्षणचिन्तनमपि सविस्तरं निरूपितमस्ति। मनुस्मृतौ राज्यस्य सप्त अङ्गानि उक्तानि सन्ति। तानि च- राजा, मन्त्री, पुरं, राष्ट्रं, कोशः, दण्डः, मित्रं च सन्ति। तद्यथा-

**स्वाम्यमात्यौ पुरं राष्ट्रं कोषदण्डौ सुहृत्तथा।**
**सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते।।**[2]

राज्यस्य राष्ट्रस्य वा एतेषां सप्ताङ्गानां सविस्तरं विवेचनं सिद्ध्यति यत् मनुस्मृतौ राष्ट्ररक्षणस्य उत्कृष्टं चिन्तनं विद्यते। राष्ट्रस्य सुरक्षायै उन्नत्यै च एतानि अङ्गानि सुदृढानि भवेयुः।

एतेषाम् अङ्गानां का अर्हता, कानि कार्याणि, का आवश्यकता, किं च वैशिष्ट्यमिति सर्वं मनुस्मृतौ सविस्तरं निरूपितमस्ति। एतेषां विषये विवेचनमत्र क्रमशः प्रस्तूयते।

(1) **राजा स्वामी वा -** राजा स्वामी वा प्रजानां रक्षायै भवति। प्रत्येकं क्षत्रियस्यापि कर्तव्यमस्ति प्रजानां रक्षणम्। तद्यथा-

**प्रजानां रक्षणं दानमिज्याऽध्ययनमेव च।**
**विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः।।**[3]

सर्वस्य लोकस्य रक्षार्थं भगवान् राजानमसृजत्। तद्यथा -

**अराजके हि लोकेऽस्मिन् सर्वतो विद्रुते भयात्।**
**रक्षार्थमस्य सर्वस्य राजानमसृजत् प्रभुः।।**[4]

राजा विनयशीलो भवेत्, विप्रान्, शुचीन् ब्राह्मणान्, वृद्धांश्च सेवेत। स त्रयीं विद्यां, दण्डनीतिं आन्वीक्षिकीं आत्मविद्यां कृषिवाणिज्यपशुपालनादिवार्तां शिक्षेत। जितेन्द्रियो राजा एव प्रजाः वशे स्थापयितुं शक्नोति अतः स इन्द्रियाणां जये प्रयत्नशीलो भवेत्। स कामक्रोधजन्यदोषेभ्यः आत्मानं रक्षेत्।[5] यथा लवनकर्ता क्षेत्रे धान्यानि रक्षति, तृणादिकं चोत्पाटयति तथैव राजा राष्ट्रं रक्षेत् शत्रून् च विनाशयेत्। तद्यथोक्तं मनुस्मृतौ -

**यथोद्धरति निर्दाता कक्षं धान्यं च रक्षति।**
**तथा रक्षेन्नृपो राष्ट्रं हन्याच्च परिपन्थिनः।।**[6]

एतदर्थमेव भगवान् अवतरति। तद्यथोक्तं श्रीमद्भगवद्गीतायाम् -

**परित्राणाय साधूनां विनाशाय च दुष्कृताम्।**
**धर्मसंस्थापनार्थाय सम्भवामि युगे युगे।।**[7]

राजा सदा सन्धिविग्रहादिगुणान् चिन्तयेत्। यतो हि राष्ट्रहिताय एतत्सर्वमावश्यकमस्ति। तद्यथा -

**सन्धिं च विग्रहं चैव यानमासनमेव च।**
**द्वैधीभावं संश्रयं च षड्गुणांश्चिन्तयेत् सदा।।**[8]

सन्धिविग्रहादीनामपि विस्तरेण विवरणं विद्यते मनुस्मृतौ। राजा बकवदर्थं चिन्तयेत्। यथा बकस्य ध्यानं मत्स्यग्रहणे भवति तथैव राजा शत्रोः अर्थग्रहणे दत्तचित्तः स्यात्। राजा सिंहवत् पराक्रमेत् अर्थात् यथा सिंहः स्वशक्त्या स्थूलमपि गजं, चञ्चलं हरिणं वापि आक्रमति तथैव राजा शत्रुं विनशायितुम् आक्रमेत्। वृकवच्च शत्रुं व्यापादयेत्। यथा पालकेन रक्षितं पशुमपि वृकः कथञ्चित् अवसरं प्राप्य व्यापादयति तथैव राजा अवसरं दृष्ट्वा शत्रुं व्यापादयेत्। शशवत् च पलायेत। यथा शशः क्वचित् हिंसकपशुभिः आवृतोऽपि कुटिलगत्या ततः पलायते तथैव शत्रुभिः परिवृतोऽपि राजा कथञ्चित् शत्रुं विमुह्य पलायेत। तद्यथा-

**बकवच्चिन्तयेदर्थान्सिंहवच्च पराक्रमेत्।**

**वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत्।।**[9]

कालिदासः प्रजासु विनयाधानं कुर्वाणं, रक्षणं कुर्वाणं, पोषणं कुर्वाणं च राजानं दिलीपं प्रजानां पितरमेव घोषयति -

**'प्रजानां विनयाधानाद् रक्षणाद् भरणादपि।**

**स पिता पितरस्तासां केवलं जन्महेतवः।।'(रघुवंशे 1.25)**

(2) **मन्त्री -** अमात्यः राष्ट्रे महत्त्वपूर्णः भवति। मनुस्मृतौ अमात्यविषये विस्तृतं विवरणं विद्यते। राजा पितृपितामहक्रमेण सेवकान्, शास्त्रज्ञान्, वीरान्, आयुधविदः विशुद्धकुलोद्भवान् सप्त अष्टौ वा सचिवान् कुर्वीत। तद्यथा-

**मौलाञ्छास्त्राविदः शूरांल्लब्धलक्षान्कुलोद्भवान्।**

**सचिवान् सप्त चाष्टौ वा प्रकुर्वीत परीक्षितान्।।**[10]

राज्यकार्यस्य सौकर्याय अमात्यानां नियुक्तिः करणीया भवति। राजा मन्त्रिभिः सार्धं सन्धिविग्रहं स्थानं समुदयं गुप्तिं लब्धधनादिकस्य सदुपयोगं च चिन्तयेत्। अमात्यानामभिप्रायं ज्ञात्वा स्वयं विचार्य च राष्ट्रहितं विदध्यात्। राजा अन्यान् शुचीन् प्राज्ञान् अवस्थितान् सम्यग्धनार्जनशीलान् सुपरीक्षितान् अमात्यान् कुर्यात्। तेषु अमात्येषु शूरान् दक्षान् कुलक्रमादागतान् शुचीन् अर्थनिःस्पृहान् धनोत्पत्तिस्थाने कर्मणि नियुञ्जीत, भीरून् च अन्तःपुरे नियुञ्जीत।

महाकविर्भवभूतिरपि पुरोहितविषये लिखति -

**न तस्य राष्ट्रं व्यथते न रिष्यति न जीयर्ति।**

**त्वं विद्वान् ब्राह्मणो यस्य राष्ट्रगोपः पुरोहितः।।**[11]

यावद्भिः मन्त्रिभिः राज्ञः कार्यं सम्पद्यते तावतः एव आलस्यरहितान् मन्त्रिरूपेण नियोजयेत्।

(3) **पुरम् -** पुरमिति सम्प्रति राजधानी इति वक्तुं शक्यते। राजा कीदृशे देशे निवसेदिति विवक्षायां मनुराह -

**जाङ्गलं सस्यसम्पन्नमार्यप्रायमनाविलम्।**

**रम्यमानतसामन्तं स्वाजीव्यं देशमावसेत्।।**[12]

एतादृशे देशेऽपि दुर्गमाश्रित्य वसेत्। दुर्गं च षड्विधं प्रोक्तं मनुना -

**धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा।**

**नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत् पुरम्।।**[13]

(4) **राज्यम् -** राजा राज्यस्य तत्तत्कार्येषु विविधान् कर्मकुशलान् अध्यक्षान् कुर्यात्। ते च अध्यक्षाः राज्ञः कार्याणि सर्वाणि सम्यक् कार्यार्थमवेक्षेरन्। तद्यथा-

**अध्यक्षान् विविधान् कुर्यात्तत्र तत्र विपश्चितः।**
**तेऽस्य सर्वाण्यवेक्षेरन्नृणां कार्याणि कुर्वताम्।।**[14]

(5) **कोषः -** राजा अमात्यैः वर्षग्राह्यं धान्यादिभागमानाययेत्। करग्रहणं शास्त्रानुमोदितमेव भवेत्। तद्यथा-

**सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद् बलिम्।**
**स्याच्चाम्नायपरो लोके वर्तेत पितृवन्नृषु।।**[15]

कोषवृद्ध्यै लोकात् करः ग्रहीतव्यः। किन्तु राजा सावधानेन करग्रहणं कुर्यात्। यथा जलौकः वत्सः भ्रमरः च क्रमशः रक्तं दुग्धं मधु च अल्पम्-अल्पं गृह्णन्ति तथैव राज्ञा अल्पः अल्पः वार्षिकः करः प्रजातः ग्रहीतव्यः। तद्यथा-

**यथाल्पाल्पमदन्त्याद्यं वार्योकोवत्सषट्पदाः**
**तथाल्पाल्पो ग्रहीतव्यो राष्ट्राद्राज्ञाब्दिकः करः।।**[16]

(6) **दण्डः -** राजा नित्यम् उद्यतदण्डः स्यात्। हस्त्यश्वादियुद्धादिशिक्षाभ्यासं प्रतिदिनं कुर्यात्। स्वकीयं पुरुषार्थं सैन्यशक्तिं प्रकाशीकुर्यात्। गुप्तं मन्त्राचारचेष्टादिकं संवृतं रक्षेत्। शत्रोः छिद्रान्वेषणे सर्वदा तत्परो भवेत्। तद्यथा-

**नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः।**
**नित्यं संवृतसंवार्यो नित्यं छिद्रानुसार्यरेः।।**[17]

दण्डस्य भयेन सर्वे प्राणिनः भोगं कर्तुं समर्था भवन्ति। दण्डभयादेव सर्वे प्राणिनः स्व-स्वधर्मे निरता भवन्ति। राज्यव्यवस्थायै दण्डप्रयोगः आवश्यक एव भवति। तद्यथा-

**तस्य सर्वाणि भूतानि स्थावराणि चराणि च।**
**भयाद् भोगाय कल्पन्ते स्वधर्मान्न चलन्ति च।।**[18]

राजा देशं कालं शक्तिं विद्यां च तत्त्वतः अवेक्ष्य अन्यायवर्तिषु शास्त्रानुसारं दण्डविधानं कुर्यात्। दण्डस्य महत्त्वं निरूपयता मनुनोक्तम्-

**दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति।**
**दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः।।**[19]

दण्डस्य प्रयोगकर्ता राजा सत्यवादी समीक्ष्यकारी प्राज्ञः धर्मकामार्थकोविदो भवेत्।[20] अन्यथा दण्डस्य अनुचितप्रयोगः अनर्थाय

भवितुमर्हति। शुचिः सत्यसन्धः शास्त्रानुसारी सुसहायः धीमान् च राजा दण्डं प्रणेतुं शक्नोति।[21] राजा स्वदेशे शास्त्रानुमोदितेन न्यायेन आचरेत् किन्तु शत्रुपक्षे तीक्ष्णदण्डः भवेत्। स मित्रेषु अकुटिलः, ब्राह्मणेषु च क्षमान्वितो भवेत्। तद्यथा-

**स्वराष्ट्रे न्यायवृत्तः स्याद् भृशदण्डश्च शत्रुषु।**

**सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः।।**[22]

विद्वांसः सामादिषु चतुर्षु उपायेषु अपि राष्ट्राभिवृद्धये दण्डं प्रशंसन्ति। तद्यथा-

**सामादीनामुपायानां चतुर्णामपि पण्डितः।**

**सामदण्डौ प्रशंसन्ति नित्यं राष्ट्राभिवृद्धये।।**[23]

(7) **मित्रम् -** राज्ञः धर्मज्ञं कृतज्ञं तुष्टप्रकृतिं अनुरक्तं स्थिरारम्भं च लघुमित्रमपि प्रशस्यते। तद्यथा-

**धर्मज्ञं च कृतज्ञं च तुष्टप्रकृतिमेव च।**

**अनुरक्तं स्थिरारम्भं लघुमित्रं प्रशस्यते।।**[24]

राजा स्वर्णभूमिलाभेन तथा वृद्धिं न प्राप्नोति यथा स्थिरं मित्रं प्राप्य वर्धते। अतः राज्ञा स्थिरमित्रप्राप्त्यै यत्नः विधीयते।

(8) **व्यवस्था -** राज्ञः पुरम् आयुधैः, धनधान्येन वाहनैः ब्राह्मणैः शिल्पिभिः यन्त्रैः पशुभक्ष्येन उदकेन च सम्पन्नं भवेत्। तद्यथा-

**तत्स्यादायुधसम्पन्नं धनधान्येन वाहनैः।**

**ब्राह्मणैः शिल्पिभिर्यन्त्रैर्यवसेनोदकेन च।।**[25]

राजा अप्राप्तं प्राप्तुमिच्छेत्, प्राप्तं रक्षेत्, रक्षितं वर्धयेत्, वर्धितं च सत्पात्रेषु दद्यात् तद्यथा-

**अलब्धं चैव लिप्सेत लब्धं रक्षेत्प्रयत्नतः।**

**रक्षितं वर्धयेच्चैव वृद्धं पात्रेषु निक्षिपेत्।।**[26]

राजा सर्वशास्त्रविशारदं प्रीत्यप्रीतिभावसूचकतत्त्वज्ञं दोषरहितं चतुरं कुलीनं च राजदूतं कुर्यात्।[27] राजा प्रजानां रक्षकः राष्ट्रस्य रक्षकः भवति। राजानं विना राष्ट्रं स्थिरं नहि भवति। अतः राजसिंहासनं रिक्तं नैव भवेत्। एतस्मादेव कारणात् राज्ञः सद्यःशौचं भवति अथवा स तु सर्वदाशुचिरेव भवति। तद्यथा-

**राज्ञो माहात्मिके स्थाने सद्यःशौचं विधीयते।**

**प्रजानां परिरक्षार्थमासनं चात्र कारणम्।।**[28]

(9) **युद्धम् -** युद्धेषु अन्योन्यं हन्तुमिच्छन् युध्यमानः राजा क्षत्रियो वा स्वर्गं प्रयाति। तद्यथा-

**आहवेषु मिथोऽयोन्यं जिघांसन्तो महीक्षितः।**
**युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः।।**[29]

यदा राजा स्वीयं सैन्यं हर्षयुक्तं धनादिना पुष्टं च जानीयात् आत्मानं च कोशादिशक्तित्रयेणोपचितं जानीयात् तदा विग्रहम् अर्थात् शत्रुं जेतुं युद्धं कुर्यात्। तद्यथा -

**यदा मन्येत भावेन हृष्टं पुष्टं बलं स्वकम्।**
**परस्य विपरीतं च तदा यायाद्रिपुं प्रति।।**[30]

अलङ्कारादिभिः विभूषितः राजा सैनिकान्, वाहनानि, शस्त्राणि, आभरणानि च निरीक्षेत। तद्यथा -

**अलङ्कृतश्च सम्पश्येदायुधीयं पुनर्जनम्।**
**वाहनानि च सर्वाणि शस्त्राण्याभरणानि च।।**[31]

निष्कर्षरूपेण वक्तुं शक्यते यद् मनुस्मृतौ राष्ट्रस्य सर्वेषामङ्गानां विस्तरेण सूक्ष्मतया च विवेचनं विद्यते। सर्वेषामङ्गानां लक्ष्यमस्ति राष्ट्रहित-साधनम्। मनुस्मृतौ वर्णितं राष्ट्ररक्षणचिन्तनं साम्प्रतमपि प्रासङ्गिकं वर्तते। इति दिक्।।

**सन्दर्भग्रन्थाः -**


1. *मनुस्मृतौ 2.10, मनुः, हरगोविन्द शास्त्री, चौखम्बा संस्कृत भवन, वाराणसी, च सं. 2012 ई.*
2. *मनु. 9.294*
3. *मनु. 1.89*
4. *मनु. 7.3*
5. *मनु. 7.45*
6. *मनु. 7.110*
7. *श्रीमद्भगवद्गीतायाम्*
8. *मनु. 7.160*
9. *मनु. 7.106*

10. मनु. 7.54
11. महावीरचरिते 3.18, भवभूतिः, चौखम्बा संस्कृत संस्थान वाराणसी
12. मनु. 7.69
13. मनु. 7.70
14. मनु. 7.81
15. मनु. 7.80
16. मनु. 7.129
17. मनु. 7.102
18. मनु. 7.15
19. मनु. 7.18
20. मनु.7.26
21. मनु. 7.31
22. मनु. 7.32
23. मनु. 7.109
24. मनु. 7.209
25. मनु. 7.75
26. मनु. 7.99
27. मनु. 7.63
28. मनु. 5.94
29. मनु. 7.89
30. मनु. 7.171
31. मनु. 7.222

# 6

# रामकथायाः लोकचैतन्यं राजशेखरश्च

*पूर्णचन्द्र उपाध्यायः*

क्रान्तद्रष्टुः कवेरलौकिकप्रतिभाजन्यं यत्काव्यं दृश्यं वा श्रव्यं वा, तत्तु सकललोकवृत्तबिम्बाधायकं सत्समस्तलोकोपदेशकारकं किमप्यनिर्वचनीयं तत्त्वमिति नास्त्यत्र काचिद्विप्रतिपत्तिः। यतोहि अपरप्रजापतिः कविः लोकस्य निर्माता, मार्गप्रदर्शकः, आचार्यः, शिक्षकः, नीतितत्त्वोपदेष्टा, व्यवहारज्ञान-शिक्षकश्च। प्राचीनाचार्येण भरतमुनिना अपि तथ्यमेतदुपदिष्टम्। उक्तं च तेन -

**नानाभावोपसंपन्नं नानावस्थान्तरात्मकम्।**
**लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम्।।**[1]

काव्यहेतुं प्रतिपादयता मम्मटाचार्येणाऽपि समर्थयिषितं यत् काव्योत्पत्तौ अस्ति लोकावेक्षणस्य उपादेयत्वम्। एतद्विना तु काव्यनिर्मितिः दुष्करा एव। तद्धि-

**शक्तिर्निपुणतालोकशास्त्रकाव्याद्यवेक्षणात्।**
**काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे।।**[2]

काव्यप्रयोजनं निरूपयता तेनैव पुनरप्युक्तम् -

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।**
**सद्यः परनिर्वृत्तये कान्तासम्मिततयोपदेशयुजे।।**[3]

अपि च 'लोकानुकीर्तनं काव्यम्'[4] इति आधुनिकाचार्यराधावल्लभस्य काव्यलक्षणमपि तथ्यमिदं समर्थयति। तदित्थम् उपर्युक्तैः काव्यशास्त्रीयतत्त्वैः स्पष्टतामुपयाति यत् लोकस्य अर्थात् पंचमहाभूतात्मकजगतः काव्यस्य च परस्परमस्ति कश्चन् अभेदः नाम अविनाभावसम्बन्धः। आशयोऽसौ यत् लोकः अस्ति चेत् काव्यमस्ति, काव्यमस्ति चेत् लोकोऽपि विद्यते इति। अर्वाचीनाचार्य-

राधावल्लभस्यानुसारं तदिदं लोकचैतन्यं मनुष्यमात्रस्य प्राणाधायकं तत्त्वम्। लोकचैतन्यस्याभावेन तु शास्त्रस्य, धर्मस्य, समस्तपौराणिकवृत्तस्यापि निरर्थकत्वम्। तद्धि -

**शास्त्रस्याध्ययनं वृथाधिकतरं धर्मस्य चर्चा वृथा**
**वैकल्यन्तु ता कथापि सकला पौराणिकी शशवती।**
**नो ध्याता जनता जनस्य हृदये नारायणः संस्थितः**
**नो ज्ञाता यदि नो कृतोऽस्ति जनतोद्बोधाय यत्नो नो वा।।**[5]

किंच नियतिकृत नियम रहित काव्य संसारस्य अद्वितीय निर्माता कविः स्वकीय दिव्यदृष्टिभिः जीवजगति स्वाभाविकतया संघटमानघटनाजातं युगानुसारि परिवर्तनानि च न केवलं सामीप्यात् पश्यति, अपि तु तत्कारणान्वेषणपूर्वकं तन्निदानार्थं स्वकीयं बहुमूल्यं लोकमंगलकारिपरामर्शं लीलया संदिश्य अकल्पनीयपरिवर्तनादाने समर्थो भवति। तदेतदेव तदीयमानवजीवनस्य सार्थकता कवित्वहृदयस्य अन्वर्थता च। यतोहि लोकचैतन्यविरहितं कवेः कवित्वं निष्प्राणशरीरवद् भवति।

वस्तुतः अतिविचित्रः अप्रतिमश्चासौ काव्यसंसारः। विशेषतया संस्कृत काव्यजगतः अनन्ता पूर्व सर्जन शीलता सर्वथा विस्मयावबोधनकारिणी एव। आवैदिककालादिदानीन्तनं यावत्सुरवाग्वध्वाः विविधमार्गावगाहिनी सुदीर्घेयं यात्रा सुरसरिद इव निरवच्छिन्ना सततप्रसरणशीला च सती त्रैकालिकाधिभौतिकाधि-दैविकाध्यात्मिकलोकमङ्गलकारिणीति नात्र संशीतिः। वैदिक साहित्यात्परं लौकिकसाहित्यत्वेन रामायणस्य आद्यावतरणत्वात् तदिदमार्षकाव्यम् आदिकाव्यत्वेन प्रसिद्धित्वमधिगतम्। वाल्मीकि रामायणस्य रचनायाः पूर्वमपि रामकथायाः वचन-श्रवण-गायनपरम्परा प्रचलन्ती आसीत्। हरिवंशपुराणानुसारं वाल्मीकिना रामायणं रचितम्, परन्तु ततः पूर्वं रामकथेयं सूतचारणकुशीलवादिभिः भृशं गीयतेस्म।

तदस्यामतिविचित्र परम्परायां तत्तत्सुरभारती साधकानां तत्तत्काल-जयिकृतिषु ''रम्या रामायणी कथा'' ''यावद् स्थास्यन्ति गिरयः सरितश्च महीतले। तावद् रामायणी कथा लोकेषु प्रचरिष्यति।।''[6] चइत्यादिसूक्तिजातम् अन्वर्थीकुर्वद् भास्वरं काव्य रत्नम् आदि कवि श्री वाल्मीकि विरचितं रामचरित कथामृत संसिक्तं रामायणं कस्य वा सचेतसः चेतः नाह्लादकारि स्यात्। महाकवे र्वाल्मीकेः

काव्यवल्लरीयं तत्तद्हृदयानुरंजकैस्तत्त्वैर्न केवलं सहृदयहृदयान् कर्षति, अपि तु सकलजीवजगतः हितानुबन्धिभिः लोकचैतन्यात्मकतत्त्वसंविधानकैः समग्रं लोकम् अनुशास्ति पुष्णाति चेति तदीयं वैशिष्ट्यम् अनितरम्। रामायणे सन्निहितं यल्लोकचैतन्यं तत्तु प्राकृतिकं सांस्कृतिकं च पर्यावरण संरक्षणात्मकम् इति प्रामुख्येन द्विधा व्यपदेष्टुं शक्यते। तदत्रास्माभिः विवेचयिषितं सांस्कृतिकं लोकचैतन्यं, यत्खलु प्राच्यसंस्कृतेरस्मिता एव।

सांस्कृतिक पर्यावरणात्मकं लोकचैतन्यन्तु मानवीयसंवेदनं, वैदिक तत्त्व गुरुत्वख्यापनं, पारिवारिकं, दाम्पत्य प्रेम, भारतीय नारी चैतन्यं, गार्हस्थ्यं, सुसन्ततिजननं, सामाजिकम्, अनुशासनं, मानवाधिकार संरक्षणं, विनयाधानम्, अतिथि सत्कारः, पूज्यसंपूजनं, कर्तव्यकर्मसम्पादनं, प्राजातान्त्रिकं, प्रजापालनं, दुष्टनिदलनं, शिष्टसंरक्षणं, दरिद्रसंवेदनं, वर्णाश्रमव्यवस्थायाः संविधानं चेत्यादि मानवीय जीवन मूल्यात्मकं नैकविधस्वरूपम् आधत्ते। तदेतत्सर्वमपि तत्त्वजातं रामकथायां प्रतिपदं सन्निहितमिति प्राच्यसंस्कृतिमहोदधेः रामायणस्य लोकनायकस्य मर्यादा पुरुषोत्तमस्य श्रीरामचन्द्र चरितस्य चास्ति किमपि अनिर्वचनीयं वैशिष्ट्यम्।

संस्कृतवाङ्मये तु प्राणी मात्रं प्रति मानवीयसंवेदनायाः अनुपमम् अमितं च यन्निदर्शनजातं तदेव समरसतायाः साक्षात्स्वरूपम्। तदत्र रामायणस्य उत्पत्तौ आदिकवेः वाल्मीकेः यदादिकवित्ववृत्तं तत्तु संवेदनानिस्सृतं नैसर्गिकमिति सकलसहृदयप्रमाणमेव। तमसानद्यां स्नानरतः महर्षिः वाल्मीकिः यदा व्याधप्रहृतबाणहतक्रौंचजनितशोकाकुलितक्रौंच्याः विलापम् आशृणोति तदा समरसकरुणार्द्रितचेतसः तस्य मुखात् च्छन्दोमयी वाणी प्रस्फुरति रामायणस्याविर्भावत्वेन, यत्खलु मानवीयसंवेदनायाः प्रकृष्टं निदर्शनम्। तद्यथा -

मा निषाद प्रतिष्ठां त्वमगमः शशवतीः समाः।

**यत्क्रौंचमिथुनादेकमवधीः काममोहितम्।।**[7]

एतदेवतथ्यमवलम्ब्य महाकविना कालिदासेन सीतापरित्यागप्रसङ्गे निगदितम्-

**निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः।**[8]

नवम-ईशवीयोवः काव्यशास्त्री ध्वन्यालोककारः आनन्दवर्धनाचार्योऽपि-महाकवेः वाल्मीकेः आदिकवित्वं प्राणीमात्रं प्रतिसंवेदनात्मकत्वेन प्रमाणी-करोति। तद्धि -

**काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।**
**क्रौंचद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः।।**[9]

रामकथायां मर्यादा पुरुषोत्तमस्य श्रीरामचन्द्रस्य चरित्रे सामाजिक समरसतायाः उदात्तं दर्शनं परिलक्ष्यते। सो·सौ श्रीरामचन्द्रः प्रजानुरंजनत्वेन सामाजिकसामरस्य- निमित्तं स्वकीयान् प्राणान्, प्राणवल्लभां प्रियतमां सीतां चापि त्यक्तुं स्वान्तः नैव व्यथते। तद्यथा -

**अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम्।**
**न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः।।**[10]

तदिदं तथ्यं परवर्तिनि काले भवभूतिना अपि प्रतिपादयिषितम्। तद्यथा-

**स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।**
**आराधनाय लोकस्य मुंचतो नास्ति मे व्यथा।।**[11]

मर्यादा पुरुषोत्तम रामचन्द्रस्य चरितं तु अत्यन्तम् उदात्तं महनीयं च। तदीय मानवीय संवेदनायाः प्रमाणं तदा शिखरत्वमधिगच्छति यदा·सौ रावणस्य मृत्युना संतप्तं विभीषणं संवेदयन् ब्रूते -शत्रुता तु शत्रेः देहावसानं यावद् भवति, अस्माकं तत्प्रयोजनमपि पूर्णतामधिगतम्। काले·स्मिन् अस्य दाहसंस्कारादिकं सम्पादय, यथा·सौ त्वदीयः भ्राता तथैव ममापि -

**मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम्।**
**क्रियतामस्य संस्कारो ममाप्येष यथा तव।।**[12]

तदिदं रामस्यौदार्यं मानवीयसंवेदनं वा रामकथायां (रामायणे) बहुत्र संलक्ष्यते। वस्तुतः ''रमन्ते योगिनः अस्मिन् इति रामः'' इति व्युत्पत्तिम् अन्वर्थीकुर्वत् श्रीरामचन्द्रस्य व्यक्तित्वं जनजीवनस्य कृते न केवलं राष्ट्रियत्वम् अपि तु वैश्विकत्वम् आधत्ते। तदस्मिन् विषये वाल्मीकेः कथनं यत् -

**यश्च रामं न पश्येत्तु यं च रामो नपश्यति।**
**निन्दितः सर्वलोकेषु स्वात्माप्येनं विगर्हते।।**[13]

गुरुजनसम्माननं समादरो वा भारतीयसंस्कृतेः वैशिष्ट्यमपरम् अनुपमम्। श्रीरामचन्द्र द्वारा पितुः दशरथस्य प्रतिज्ञापूर्तये स्वेच्छया वनगमनं, अग्रजं रामचन्द्रं प्रति अनुजयोः भरत लक्ष्मणयोः श्रद्धाभाव प्रदर्शनं चेत्यादिकं रामकथायाः सांस्कृतिकं लोकचैतन्यं व्यनक्ति। दशरथस्य मृत्युसमाचारं श्रुत्वा भरतः विलापपूर्वकं कैकेयीम् आपृच्छति -

**योो मे भ्राता पिता बन्धुर्यस्य दासोऽस्मि सम्मतः।**
**तस्य मां शीघ्रमाख्याहि रामस्याक्लिष्टकर्मणः।।**[14]

भरतस्येव लक्ष्मणस्यापि भ्रातृभक्तिः सर्वथा अनितरविशिष्टा एव। वनवाससमये सुखपूर्वकं विश्रामकरणार्थं गुहराजस्य निवेदनं श्रुत्वा लक्ष्मणः आवेदयति यत्-

**कथं दशारथौ भूमौ शयाने सह सीतया।**
**शक्या निद्रा मया लब्धुं जीवितं वा सुखानि वा।।**[15]

रामकथानुसारं तत्कालीन संस्कृतौ नार्याः सम्मानः भवति स्म। परिवारस्य, समाजस्य, राष्ट्रस्य च समुत्थाने स्त्रियाः योगदानं पुरुषेण सममेव आसीत्। नार्याःकृते तिरस्करिणी प्रथा(पर्दा प्रथा) निषिद्धा आसीत्। सन्दर्भेऽस्मिन् श्रीरामचन्द्रस्योक्तिरियं यत्-

**न गृहाणि न वस्त्राणि न प्राकारस्तिरक्रिया।**
**नेदृशा राजसत्कारा वृत्तमावरणं स्त्रियाः।।**
**व्यसनेषु न कृच्छ्रेषु न युद्धेषु स्वयंवरे।**
**न क्रतौ नो विबाहे वा दर्शनं दूष्यते स्त्रियाः।।**[16]

नारीणां कृते दुराचरणं, तासाम् अपहरणं बलात्कारपीडनं वा समाजे सर्वथा निन्दनीयं दुर्गतिकारकं वा आसीत्। जानक्याः अपहरणेन रावणः विभीषणमाल्यद्भयां बहुधा धिक्कृतः। जटायुरपि सीतापहरणाद्रावणं निवारयन् कथितवान् आसीद्यत्, स्त्रियः धर्षणाद् रक्षणीयाः -

**दारा रक्ष्या विमर्शनात्।**[17]

तदेवं रामकथायाः सांस्कृतिकममितं कालजयि लोकचैतन्यमेव तज्जनादृतत्वस्य प्रकृष्टं कारणम्। अपि च तदेतस्मात् कारणादेव परवर्तिनि काले प्राचीनादारभ्य अर्वाचीनम् इदानीन्तनं यावद् रामकथामाश्रित्य रघुवंश, सेतुबन्धं, रावणवधं, जानकीहरणं, जानकीजीवनं, वाल्मीकिचरितं चेत्यादीनि नैकानि महाकाव्यानि तथा च प्रतिमानाटकं, महावीरचरितम्, उत्तररामचरितं, बालरामायणं, प्रसन्नराघवं चेत्यादीनि नैकानि नाटकानि लोकोपदेशाय संरचितानि संरच्यन्ते च।

तदत्रास्माभिः प्रसङ्गानुकूल्येन रामकथायाः प्रगति सोपानान् अधिगतेशु तत्तत्प्रसिद्धेशु काव्यनाटकेशु अन्यतमस्य राजशेखर विरचितस्य बालरामायणस्य संक्षिप्तं समीक्षणं कर्तुमिष्यते प्रामुख्येन वस्तु प्रतिपादन दृश्ट्या। दशमशतकेशतकोवः बालकविः, कविराजश्चेत्येताभ्यामुपाधिभ्यां विभूषितः

यायावरवंशीयः विद्वत्कविः राजशेखरोऽसौ आसीन्महाराष्ट्रचूडामणेः कविवरस्याकालजलदस्य पौत्रः दुर्दुकस्य च पुत्रः, जननी चास्य आसीत् शीलवती। आचार्यत्वं कवित्वं चोभयविधं प्रातिभ्यं निजीकुर्वता सारस्वतसाधकेन राजशेखरेण संस्कृत साहित्याकशो भास्वराणि नक्षत्राणीव षट्संख्यकानि कृतिरत्नानि प्रज्वालितानीति सोऽसौ स्वयमेव उद्घोषयति "विद्धि नः षट् प्रबन्धान्"[18] इत्यभिधानेन। परम् इदानीं पंच संख्यकानि एव उपलभ्यन्ते। तानि यथा- 1. काव्यमीमांसा 2. बालरामायणम् 3. बालभारतम् (प्रचण्डपाण्डवम्) 4. विद्धशालभंजिका 5. कर्पूरमंजरी च।

रामकथायाः प्रगतिसोपाने कवेरस्य राजशेखरस्य आसीत् किमपि विशिष्टम् अपूर्वं च योगदानमिति स्वयं तनैव सुदृढम् उद्घोषितम्। उक्मं च तेन -

**बभूव वाल्मीकिभवः कविः पुरा**
**ततः प्रपेदे भुवि भर्तृमेण्ठताम्।**
**स्थितः पुनर्यो भवभूतिरेखया**
**स वर्तते सम्प्रति राजशेखरः।।**[19]

पद्येऽस्मिन् राजशेखरः आत्मानं रामायणस्य प्रथमस्रष्टुः आदिकवेः पाल्मीकेः, हयग्रीव वध महाकाव्यस्य प्रणेतुः भर्तृमेण्ठस्य, करुणरसविग्रहात्मकस्य भवभूतेश्च अवतारं मनुते, अपि च लीलया समसामयिकसमाजोपयोगित्वेन नवीन तथ्य संयोजन पुरस्सरं यथावसरं वस्तुपरिवर्तनं विधाय रामकथां संवर्धयन् आस्ते इति प्रमाणयति।

दशभिरङ्कैः निबद्धेऽस्मिन् महानाटके बालरामायणे राजशेखरेण रामायणगतं सम्पूर्णं कथावस्तु स्वकवित्वप्रतिभया प्रतिपादयिषितम्। भवभूतिना रामकथायाः महत्त्वं विशालत्वं चोभयोः निर्बहणार्थमेव महावीरचरितम् उत्तररामचरितं चेति द्वाभ्यां ग्रन्थाभ्यां नाट्यरूपायितम्। राजशेखरेण तु पूर्वरामचरितम् आश्रित्य विशालं नाटकं रचितम्। रामकथायाः पूर्वभागवर्णनत्वादेव नाटकस्यास्य नामकरणं बालरामायणमिति अन्वर्थतामुपैति, रचनाकारश्च बालकविरिति एतेनैव कारणेन। किं च नाटकमिदं रामलीलायाः प्रचीनपरम्परामपि निर्बहति, यतोहि नाटकस्यास्य प्रत्येकम् अङ्कः एकैकलीलामाश्रित्य संज्ञामाधत्ते। तदत्र नाटकस्य प्रत्यङ्कं यन्नामकरणं तदपि रामकथायाः नावीन्यं पुरष्करोति, तद्यथा- प्रतिज्ञापौलस्त्यः, परशुरामरावणीयः, विलक्षलङ्केश्वरः, भार्गवभङ्गः,

उन्मत्तदशाननः, निर्दोष दशरथः, असमपराक्रमः, वीरविलासः, रावणवधः, राघवानन्दश्च। राजशेखरेण स्वकीयनाटके रामकथायाः नावीन्यमादधता रावणचरितस्य वर्णनम् आधिक्येन प्रतिपादयिषितम्। नाटकस्यास्य केवल मङ्कत्रितये एव रामचन्द्रस्याविर्भावः, परन्तु तदतिरिक्तपात्राणां दशरथ परशुराम रावणानां चरित्र चित्रणं संपूर्ण नाटके गुरुतामाधत्ते। बालरामायणस्य रामकथायां नैकेषां नवीनतत्त्वानां संयोजनं सर्वथा राजशेखरस्य अलौकिकं कवित्वप्रातिभ्यं तदीयं लोकचैतन्यं च व्यनक्ति इति कृत्वा कानिचन प्रासङ्गिकतत्त्वानि उपस्थापयितुमिष्यन्ते। तथाहि विश्वामित्राशिषयशुनःशेपस्य पात्ररूपेण उपस्थापनम् अपिच रावणस्य गुप्तचरेण साकं तदीयं संवादवर्णनं, कैकेयीदशरथयोः वनवासप्रसङ्गे तयोः निर्दोषत्वसिद्धये शूर्पणखामायामययोः कैकेयी दशरथ रूपेण परिकल्पनम्, अयोध्यायामेव शूर्पणखायाः कर्णनासिकाच्छेदन वृत्तोपस्थापनं, रावणपरशुरामयोर्विवादः, तुलाद्यूतप्रकरणं चेत्यादिकं नैकवृत्तानां संयोजनं राजशेखरस्य कल्पनावैदुष्यं प्रमाणीकुरुते। बालरामायणस्य तृतीयेऽङ्के रावणस्य मनोविनोदनार्थं तदीयसभायां प्रदोशकालेगर्भाङ्करूपेण सीतास्वयम्बरनामधेय-प्रेक्षणकस्याभिनयः संधारितः। तदिदं गर्भाङ्कपरिकल्पनं भवभूतिना प्रभावितमिव परिलक्ष्यते। नाटकस्यान्तिमेऽङ्के लङ्कातः अयोध्यां प्रति पुष्पकविमानेन रामचन्द्रस्य परावर्तनकाले भारतवर्षस्य मानदण्डभूतानां हिमालय-कैलाा-मन्दराचल-सुमेरुप्रभृतीनां पर्वतानां, दिव्यलोकानां, द्रविडस्य, आन्ध्रस्य, कावेरीनद्याः, नर्मदायाः, महाराष्ट्रस्य, उज्जयिन्याः, पांचालस्य, कान्यकुब्जस्य, प्रयागस्य, वाराणस्याः, मिथिलायशचेत्यादीनां स्वाभाविकं वर्णनं प्राच्यसंस्कृतेः अस्मितां भृशं ख्यापयति इति सो॰सौ यायावरीयः राजशेखरः सर्वथा कालजयिकवित्वेन अभिनन्दनीयः श्लाघनीयश्च। इति शम्।

**सन्दर्भग्रन्थाः -**


1. *ना शा.1.112*
2. *का.प्र.1.3*
3. *का.प्र.1.2*
4. *अभि.काव्या.सू. 1.1.1*
5. *लह.दश.(ज.ल.4)*

6. *रामायणम्, बालकाण्डः 2.36*
7. *रामायणम्, बालकाण्डः 2.15*
8. *रघु. 14.70*
9. *ध्वन्यालोकः 1.5*
10. *रामा. 3.10.19*
11. *उ.रा.च. 1.12*
12. *रामा. 6.109.25*
13. *रामा. 2.17.14*
14. *रामा. 2.72.32*
15. *रामा. 2.51.9*
16. *रामा. 6.114.27,28*
17. *रामा. 3.50.9*
18. *बा.रा. 1.12*
19. *बा.रा. 1.16*

# 7

# शिशुपालवधस्य काव्यशास्त्रीयं समीक्षणम्

*बाबूलालः मीना*

महाकविः माघः संस्कृतकाव्यजगतिः अनर्घरत्नेषु अन्यतमोऽस्ति। तस्य शिशुपालवधं महाकाव्यं बृहत्त्रय्याः अद्वितीयं रत्नं वर्तते। अस्मिन् महाकाव्यस्य सर्वाणि लक्षणानि प्राप्यन्ते। माघः स्वमहाकाव्ये स्वपूर्ववर्तिनां सर्वेषां कवीनामुत्कृष्टगुणानां समन्वयमकरोत्। सः कालिदासात् काव्यसौन्दर्यं, भारवेरर्थगौरवं भट्टेः च व्याकरणपाटवं संकलितवान्। इदं महाकाव्यं संस्कृतवाङ्मये सर्वेभ्यः परवर्तिभ्यः कविभ्यः सर्वथा अनुकरणीयं विद्यते।

माघेन शिशुपालवधमहाकाव्ये महाभारतस्य सभापर्वणः शिशुपालवधस्य लोकप्रियाकथा स्वउक्तिवैचित्रयपूर्णायाम् अलंकृतशैल्यां प्रस्तुता। शब्दार्थयोः मनोहरसामंजस्य, सर्वत्र नवीनशब्दावल्याः अभिनव पदशय्याप्रयोगस्य वा कारणेन शिशुपालवधमहाकाव्यस्य बृहत्त्रय्यां महत्वपूर्णं स्थानं विद्यते। वस्तुतः माघस्य काव्यं भाषाप्रौढ़तायाः दृष्ट्या वर्णनवैचित्रेण, अलंकारप्रयोग दृष्ट्या छन्दोयोजनया, दार्शनिकज्ञानेन, भावरसपरिपाकदृष्ट्या च शास्त्रियपाण्डित्यस्य सर्वतोमुखी प्रतिभायाश्च निदर्शनमस्ति। मूलतः माघः महाकविना सह दार्शनिकः वैयाकरणश्चापि आसीत्। सः विविधविषमगुणगणैः समन्वितऽऽसीत्, अत एव तस्य महाकाव्ये विविधविषयाणां ज्ञानं स्थाने स्थाने प्राप्यन्ते। सः तत्कालीनयुगे प्रचलितानां ब्राह्मणानां कृते उपादेयानां शास्त्राणां ज्ञानं धारयतिस्म। किं बहुना, संक्षेपेण, माघस्य सकलेषु शास्त्रेषु अद्भुतः प्रवेशः आसीत्।

वस्तुतः महाकविः माघः केवलं महावैयाकरणः दार्शनिकश्च न आसीत् अपितु काव्यशास्त्रस्य अपि महान् ज्ञाता आसीत्। तेन स्वकाव्ये काव्यशास्त्रियानां रसानां अलंकाराणां, छन्दसाम्, गुणानाम्, रीतिनाम् इत्यादिनां मान्यतानां सर्वत्र

वर्णंन कृतम्। सममेव शब्दार्थभावानां निरूपणमपि कृतम्। शिशुपालवधस्य अध्ययनेन ज्ञायते यत् सः स्वमहाकाव्ये स्वसमयमान्यतानुसारं शब्दार्थसहभावमेव काव्यलक्षणं स्वीकरोतिस्म, यथा भामहादयः स्वीकुर्वन्तिस्म -

**नालम्बते दैष्टिकतां न निषीदति पौरुषे।**

**शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते।।**[1]

सः अकथयत् सत्कविः शब्दार्थौ न उपेक्षेत। न केवलं शब्दः, न केवलमर्थः काव्यम् न कथयितुं शक्यते। एवमेव काव्यलक्षणसम्बन्धे महाकवेः माघस्य दृष्टिः समन्वयात्मिकास्ति। सः काव्ये शब्दार्थयोः स्थितेः अतिदूरे रसस्थितिमपि अपरिहार्यां मन्यते। तस्य मन्तव्यमस्ति यत् रसावस्थां प्राप्नुवतां स्थायिभावानां संचारिभावाः सहायकाः भवन्ति -

**स्थायिनोऽर्थे प्रवर्तन्ते भावाः संचारिणो यथा।**

**रसस्यैकस्य भूयांसस्तथा नेतुर्महीभृतः।।**[2]

अनेन कथनेन ज्ञायते यत् तस्य शब्दार्थौ सरसौ स्याताम्। एवमेव काव्ये सः गुणानां स्थितिमपि अपरिहार्यां मन्यते। तस्य कथनमस्ति यत् रसभावविदः कवयः केवलं ओजसि (ओजः) प्रसादं च न अनुसरन्ति अपितु द्वयोरेव गुणयोः यथावसरं अनुसरणं कुर्वन्ति -

**तेजः क्षमा वा नैकन्तं कालज्ञस्य महीपतेः।**

**नैकमोजः प्रसादो वा रसभावविदः कवेः।।**[3]

प्रकारान्तरेण तत्काव्यानुशीलनेन ज्ञायते यत् काव्ये दोषस्थानम् अक्षम्यमस्ति। माघः कथयति यत् कुशलकवयः कोमल पदावलीमपि माधुर्यादिगुणमाध्यमेन श्लेषादिगुण माध्यमेन वा वैचित्रययुक्तां कुर्वन्ति -

**मदीयसामपि घनामनल्पगुणकल्पिताम्।**

**प्रसारयन्ति कुशलाश्चित्रं वाचं पटीमिव।।**[4]

यद्यपि माघः स्वकाव्येलंकाराणां समुचितं प्रयोगं कृतवान्, तथापि काव्यात्मानं रसमेव स्वीकरोति सः। एवमेव तस्य मतम् अग्निपुराणकारेण प्रभावितं प्रतीयते। अग्निपुराणकारवत सः अपि काव्ये रसगुणयोः स्थितिमनिवार्यां स्वीकरोति। इत्थं माघः महाकविः सरसां गुणयुक्तां निर्दुष्टां सालंकारांरचनामेव काव्यलक्षणम् स्वीकरोति, अतः निष्कर्षतः तत्काव्यलक्षणमस्ति -

**अदोषौ सगुणौ सलंकारौ सरसौ शब्दार्थौ काव्यम्। इति**

माघः स्वमहाकाव्ये रस-छन्दो-लंकार-गुणादीनां समुचितं प्रयोगं कृतवान्। सममेव सः रसध्वनेः भावध्वनेश्च प्रचुरं प्रयोगं कुर्वन् काव्यस्य ध्वनिः (उत्तमम्) मध्यमः (गुणीभूतव्यंग्यकाव्यम्) अधमश्च (चित्रकाव्यम्) इति त्रीन् भेदान् स्वीकरोति। रसेषु शिशुपाल वध महाकाव्यस्य प्रधानः रसः वीर रसः वर्तते, शृंगाररसः तदंगमस्ति। वस्तुतः अस्मिन् वीर शृङ्गारयोरद्भुतं मिश्रणं वर्तते। वीररसेन सह शृंगाररसस्य एव योगः तिष्ठति। प्रथमे सर्गे एव श्रीकृष्णस्य उत्साहस्य संकेतो प्राप्यते, तदालम्बनस्य शिशुपालस्य वर्णनमपि कृतं कविना। पंचदशेसर्गे तु शिशुपालस्य कठोर वचन दोषपूर्ण व्यवहाराः उद्दीपन विभावाः विद्यन्ते। सप्तदशे सर्गे तदनुभावानां वर्णनं वर्तते। एवमेव माघः स्वमहाकाव्ये वीररसस्य पूर्णाममिव्यक्तिं कारितवान्। पश्यन्तु भवन्तः वीररसस्य कियत् मनोहारिवर्णनं विद्यते-

**रणेषु तस्य प्रहिताः प्रचेतसा सरोष हुंकारपराङ्मुखीकृताः।**
**प्रहर्तुरिवोरगराजरज्जवो जवेन कण्ठं सभयाः प्रपेदिरे।।**[5]

वस्तुतः तस्य युद्धवर्णनं तु विशुद्धवीरतायाः परिचायकमस्ति। अष्टादशसर्गेपि युद्धवर्णनं वीररसस्य उदाहरणं प्रस्तौति।।[6] संभोगश्रृंगारवर्णने महाकवेः अधिकारः प्रतीयते।[7] विप्रलम्भशृंगारविषये महाकविः सफली न दृश्यते। अन्ये रसाः यथा-रौद्ररसः[8] वीभत्सरसः[9], हास्यरसः[10] करूणस्य वत्सलस्य चाद्भुतः समन्वयः।[11] भक्तिभावनायां सः नारदमुखात् श्रीकृष्णस्य निराकाररूपं कीर्तयति।[12]

माघः छन्दसां वैविध्यं प्रदर्श्य छन्दोचयने स्वपटुतां प्रकटितवान्। क्वचित् रसानुकूलां छन्दसां प्रयोगं कृतवान। प्रथमे सर्गे वंशस्थं, द्वितीये सर्गे अनुष्टुपम्, तृतीयसर्गे उपजातिं, पंचमे सर्गे बसन्ततिलकां, षष्ठे सर्गे च द्रुतविलम्बितं प्रयुक्तवान्। महाकविः सर्गस्य अन्ते छन्दोपरिवर्तनं चकार। चतुर्थे सर्गे तु द्वाविंशतिछन्दसां प्रयोगः शास्त्रलक्षणकाराणां मान्यतानुरूपमस्ति। प्रमुखेभ्यो छन्दोभ्यः व्यतिरिक्तानां औपच्छन्दसिक -पृथ्वी-तोटक-मत्तमयूरादीनां छन्दसां प्रयोगमपि सः कृतवान्। स्रग्विणी इति छन्दसः अन्त्यानुप्रासयुक्तः सुन्दरः प्रयोगः माघस्य शैल्याः अपि समुचितमुदाहरणं प्रस्तौति। भारविणा प्रयुक्ता प्रवर्तिता चालंकारपद्धतिः माघेन स्वीकृता प्रौढ़ीकृता च। एकोनविंशे सर्गे एकाक्षर-द्वयक्षर-सर्वतोभद्र-मुरजबन्ध-प्रतिलोमयमकानि[13] गोमूत्रिकाबन्ध-

समुद्गयमकम्[14], अर्धप्रतिलोमयमकम्[15], भारविणा अप्रयुक्तः चक्रबन्धः[16], इत्यादीनां श्रमसाध्यानां चित्रकाव्यानां प्रयोगं सः कृतवान्। द्व्यक्षरपद्यानां तु अत्र संख्या अधिका वर्तते।[17] चित्रकाव्ये मुरजबन्धः[18], अन्यालंकारेषु उपमा[19], अनुप्रासः[20], स्वभावोक्तिः[21], दृष्टान्तः[22], अर्थान्तरन्यासः[23], गुणेषु ओजोगुणः[24], प्रसादगुणः[25] माधुर्यगुणः[26], एवमेव भावसौन्दर्यस्य प्रसादस्य माधुर्यस्य मधुरः समन्वयः[27], माधुर्यस्य यमकस्य लयात्मकतायाः समन्वयः पश्यन्तु भवन्तः।[28]

माघे प्रकृतिचित्रणम्[29], कमनीयकल्पना[30], माघस्य वर्णनकौशलम-पूर्वमस्ति। युद्धवर्णने श्रृंगारस्य उपमा माघेन एव सम्भवा।[31], युद्धवर्णनम्[32], वर्षर्तुवर्णनम्[33] शरदृतोः वर्णनम्[34], प्रभातवर्णनम्[35], प्रभातकालीनस्य निद्रासुखस्य वर्णनम्[36], प्राकृतिकं दृश्यम्[37], सूर्यवर्णनम्[38], यज्ञवर्णनम्[39] द्वारिकायाः समुद्रस्य च वर्णनम्[40] रैवतकपर्वतवर्णनम्[41], आकाशादवतरतः नारदस्य वर्णनम्[42], ग्राम्यजीवनचित्रणम्[43], जवनिका प्रथायाः वर्णनम्[44], रूपचित्रणम्[45], पदार्थानामायातनिर्यातवर्णनम्[46]। प्राचीनकालीनाया संगोष्ठ्याः वर्णनम् भवन्तः पश्यन्तु साक्षात् कृतम महाकविना -

**शुद्धमश्रुतिविरोधि बिभ्रतं शास्त्रमुज्जवलमवर्णसंकरैः।**

**पुस्तकेः सममसौ गणं मुहुर्वाच्यमानमश‍ृणोद् द्विजन्मनाम्।।**[47]

चतुर्दशे सर्गे च शिशुपालस्य दूतस्य उभयार्थिका चतुरा उक्तिः।[48] स्थाने स्थाने सुभाषितानि प्राप्यन्ते यथा जीवने दैवपुरुषार्थयोः समन्वयस्य समानं काव्यजगति शब्दार्थयोः समानं महत्वं विद्यते। समयः एव मनुष्यस्य उत्थानस्य पतनस्य च कारणं विद्यते।[49] माघस्य काव्यशास्त्रियमहत्तायाः निरूपणम् अस्यां प्रशस्तौ प्राप्यते -

**उपमा कालिदासस्य भारवेरर्थगौरवम्।**

**नैषधे पदलालित्यं माघे सन्ति त्रयो गुणाः।।**

माघस्य उपमासु सामान्यासु एकः श्लोकः अतीव प्रसिद्ध येन माघः घण्टा माघ इति विरुदेन अलंकृतो जातः -

**उदयति विततोर्ध्वरश्मिरज्जावहिमरूचौ हिमधाम्नि याति चास्तम्।**

**वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्।।**[50]

माघे अन्याः उपमाः रमणीयाः दृश्यन्ते।[51] एवमेव अर्थगौरवम्[52]। वस्तुतः माघस्य भाषायाम् असाधारणोधिकारः आसीत् अतएव पदे पदे तस्य महाकाव्ये

पदलाललित्यं प्राप्यते।[53] पदमाधुर्य्या सह स्वरमाधुरी अपि प्राप्यते।[54] माघस्य शैली अलंकृता वर्तते। क्वचित् समासबहुलाभाषा[55] क्वचित् गुणसमन्विता, क्वचित् माधुर्यप्रसादाभ्यामुपेता भाषा दृश्यते। भाषायां नूतनाः शब्दाः अपि सर्वत्र प्राप्यन्ते अतएव समीक्षकैः कथितम् यत् नवसर्गगते माघे नवशब्दोऽपि न विद्यते ' मेघे माघे गतं वयः ' इति।

इत्थं शिशुपालवधे वर्णितानां उपर्युक्तानां रस-छन्दोलंकार-रीति-गुण-पदलालित्यादीनां वैचित्र्येण अलंकारनिबद्धवर्णनशैल्याः विस्तृतविवेचनेन च एतत् स्पष्टं भवति यत् माघस्य काव्य शास्त्रीयं ज्ञानं समुद्र वदगाधमासीत्। तस्य शिशुपालवधं काव्यशास्त्र दृष्ट्या एकं रमणीयं पाण्डित्यमयं सर्वांगपूर्णं च महाकाव्यं विद्यते।

**सन्दर्भग्रन्थाः -**


1. *तदेव, 2/86, 18/77*
2. *तदेव, 2/87, 5/7, 12/22, 13/22*
3. *तदेव, 2/83, 15/87*
4. *तदैव, 2/74,1/33, 35*
5. *तदेव, 1/56, 19/33, 34*
6. *तदैव, 18/15, 17, 19/58*
7. *तदेव, 1/61, 2/44, 3/16, 8/69, 10/42, 12/59, 13/40, 19/88*
8. *तदेव, 18/12*
9. *तदेव, 18/77*
10. *तदेव, 5/7, 12/22, 13/22*
11. *तदैव, 15/87*
12. *तदेव, 1/33, 35*
13. *तदैव, 19/33, 34*
14. *तदेव, 19/58*
15. *तदैव, 19/88*
16. *तदैव, 19/120*
17. *तदैव, 19/66, 84, 86*
18. *तदैव, 18/12*
19. *तदैव, 2/10, 28, 59, 72, 86, 11/40*
20. *तदैव, 6/20*
21. *तदैव, 12/24*
22. *तदैव, 16/25*
23. *तदैव, 1/67,72, 2/13,46, 11/64*
24. *तदैव, 1/75*
25. *तदैव, 3/16*
26. *तदैव, 4/9, 11/19*
27. *तदैव, 4/17*

*28. तदैव, 4/42*

*29. तदैव, 1/4, 5, 4/47, 6/2, 25, 11/64*

*30. तदैव, 4/20*

*31. तदैव, 18/2*

*32. तदैव, 19/75, 20/76*

*33. तदैव, 6/25*

*34. तदैव, 6/44*

*35. तदैव, 11/6, 64*

*36. तदैव, 11/4*

*37. तदैव, 3/30*

*38. तदैव, 11/41, 43*

*39. तदैव, 14/18-52*

*40. तदैव, तृतीयसर्गे*

*41. तदैव, चतुर्थसर्गे*

*42. तदैव, 1/3*

*43. तदैव, एकादशे द्वादशे च सर्गे*

*44. तदैव, 5/17*

*45. तदैव, 1/4*

*46. तदैव, 3/76*

*47. तदैव, 14/37*

*48. तदैव, 16/2*

*49. तदैव, 6/44*

*50. तदैव, 4/20*

*51. तदैव, 1/5, 2/91, 96, 112, 3/8, 4/37, 47, 19/41*

*52. तदैव, 1/67, 2/13, 72, 4/17, 47, 6/44, 9/6, 13, 11/47*

*53. तदैव, 3/78, 4/9, 15, 6/2, 14, 20, 11/64, 15/33*

*54. तदैव, 4/45*

*55. तदैव, 6/16*

# 8

# कादम्बरी कथायां जीवजन्तूनामवदानम्

*राघवेन्द्रशर्मा*

कादम्बरी कथायां कविः अनेकेषां जीवजन्तूनां वर्णनं करोति। ब्रह्मणः सृष्टौ यथा जीवजन्तूनाम् अवदानं तथैव कादम्बरी कथायामपि। जीवजन्तूनाम अभावे ब्रह्मासृष्टि-रचनायामसमर्थः प्रतीयतेतथैवकथाविन्यासे कविः। यतोहि कादम्बरी कथायां प्रत्येकं वाक्ये जीवजन्तूनां ग्रहणं करोति बाणभट्टः। अतःकथा विन्यासे जीव जन्तूनाम् अवदानमधिकृत्यविवेचनंप्रस्तूयतेऽत्र। महाकवि बाणभट्टः कादम्बरीकाव्ये अनेकेषां जीवजन्तूनां विन्यासम् अकरोत्। तस्य जीवजन्तुविषयकं समग्रं विवेचनं वर्गभेद दृष्ट्या साध्यसाधन- भेदाभ्यां द्विधाविभक्तुं शक्यते।

**साध्यरूपजीवजन्तूनां विवेचनम्-**

अस्मिन्वर्गे कविः प्रधानरूपेण जीव जन्तूनां वर्णनं करोति। यथा वैशम्पायन- शुकवर्णनम् इन्द्रायुधाश्वर्णनं गन्धमादनहस्तिवर्णनं शुकसारिकाकले हत्यादिवर्णनं च। वर्गेऽस्मिन् गृहीतानां जीव जन्तूनाम् एतानि वैशिष्ट्यानि प्रतिपादितानि महाकविना। यथा-जीवजन्तुषु मानवस्थ गुणारोपः,सर्वोत्कृष्टत्वारोपः, स्वकीयगुणानांविषद्वर्णनम्, दैवीयप्रसादाद्भूतले पदार्पणः इतिभावयुक्तवर्णनम्, दैवीय गुणानां सञ्चारः, जीवजन्तूनां संरक्षणस्य महत्त्वम्। जीवजन्तूनां वर्णने इत्यादीनि वैशिष्यानि सन्ति। यथा-

**वैशम्पायनशुकवर्णनम्-**

सम्पूर्ण कादम्बरी कथा वैशम्पायन शुकाश्रिता वर्तते। यतोहि स एव शूद्रक राजानं सम्पूर्ण- कादम्बरी कथां श्रावयति। तद्यथा- वैशम्पायनस्तु स्वयमुपजात कुतूहलेनसबहुमान-मवनिपतिनापृष्ठो मुहूर्त्तमिवध्यात्वा सादरमब्रवीत्देव! महतीयं कथा यदि कौतुकमाकर्ण्यताम्....।[1] अत्रशुकः

वाचकत्वरूपे कथा विन्यासे सहाय्यं करोति। कादम्बर्यां कथामुखभागे मुख्यकथा वैशम्पायनस्य एव अस्ति। यथा शुकस्यजन्मरूपेशाल्मली तरु वर्णनं शुकोत्पत्ति वर्णनं शुकशावकनिपातेत्यादिवर्णनम्। अस्याः सिद्धयर्थं बाणभट्टः अन्य कथानां योजनां करोति कथा मुख भागे। अनेन प्रतीयतेयत्कथा विन्यासेशुक कथामुख्यं घटकं वर्तते। अयंशुकः सम्पूर्ण कादम्बरी कथायां विराजते। महाश्वेता- प्रसङ्गे पुण्डरीकरूपेचन्द्रापीड प्रसङ्गे वैशम्पायन रूपे च। अस्मिन्वैशम्पा- यनशुकवर्णने कविः श्रेष्ठिनां रसज्ञानां विदुषां शुकाधिष्ठितगुणान् वर्णयति। अस्मिन्वर्णने एतानि वैशिष्ट्यानि सन्ति। शुकः नृत्य सङ्गीतादि रसिकः, धर्मशास्त्रादिविचक्षणः, नीतिशास्त्र- प्रवीणः, काव्य नाट्यादिरचयिता, प्रणयकलहदक्षः, लक्षणशास्त्रज्ञश्च। इत्यादि वर्णनेन कविः मानवोचित गुणान्शुके आरोपयति। प्रतीयतेऽनेन यत् शुकः मानववदस्ति। यथा-देव! विदितसकलशास्त्रार्थः राजनीति प्रयोगकुशलः पुराणेतिहासकथालापनिपुणः वेदिता गीतश्रुतीनां काव्यनाटकाख्यानकप्रभृतीनाम परिमितानां सुभाषितानामध्येता स्वयं च कर्ता परिहासालापपेशलः वीणा वेणुमुरजप्रभृतीनां वाद्यविशेषाणामसमः श्रोतानृत्यप्रयोगदर्शन- निपुणः। चित्रकर्म् मणिप्रवीणः द्यूत व्यापारे प्रगल्भः प्रणय कलहकुपित कामिनी प्रसाद- नोपायचतुरः गजतुरगपुरुषस्त्रीलक्षणभिज्ञः सकलभूतलरत्नभूतोऽयं वैशम्पायनोनामशुकः।[2] शुकः प्रायः सामन्यपक्षिः अस्ति। सःश्रूयमाणां वार्ताम् आवर्तयितुं शक्नोति।[3] एवं प्रकारेण सामान्य शुके एतेषां गुणानां विन्यासः बाणभट्ट एव कर्तुंशक्यते। यतोहि तस्य दक्षिण पादं परिकृत्वाभिवादनेन राजादिना सहव्यवहार ज्ञानं सिद्धं भवति। यथा-

तस्मिन्स विहङ्गराजो राजाभि मुखो भूत्वासमुन्नमय्य दक्षिणं चरण मति स्पष्ट-

वर्णस्वरसंस्कारया गिराकृतजयशब्दोराजन्नमुद्दिश्यार्यायामिमांपपाठ- स्तनयुगमश्रुस्नातंसमीपतरवर्तिहृदयशोकाग्नेः। चरतिविमुक्ताहारं व्रतमिवभवतोरि- पुस्त्रीणाम्।।[4]

यदाकश्चित्खगः एतावदार्यांवक्तुंशक्नोति। सः पक्षिराजः एव भवति। अतः कविः तं रत्नागारस्य उपाधिना विभूषयति। तद्यथा- सर्वरत्नानां च उदधिरिवदेवोभाजनमितिकृत्वैन मादा यास्मत्स्वामिदुहिता देवपादमूलमायाता।[5] महाकविः कुत्रचिज्जरावस्थायां शुकदम्पत्योः पुत्र जन्मना समुपजातमानन्दं । कुत्रचिज्जन्मसमये मातृमरणानन्तरं पितृदायित्वं निर्वहन् जरातुरः वैशम्पायनपिता

कष्टं सहित्वा वैशम्पायनस्य लालन-पालनं करोति कुत्रचित् स्वप्राणार्पणेन च शावकस्य प्राणरक्षां करोति। कुत्रचित् स आखेटं कुर्वन्तं वृद्धशबरं दृष्ट्वा हृदयविदारकं मृत्योर्वणर्नं करोति। नवजातशुकशावकस्य पितरौविना असह्यमनाथ-जीवनं दुष्करं वर्तते। अत्र महाकविर्बाणभट्टः वैशम्पायनवर्णनव्याजेन शुकस्य वैदग्ध्यं प्रागल्भ्यं पाण्डित्यं शैशवत्वं पितृदायित्वं मनोभावं च वर्णयति।

**इन्द्रायुधवर्णनम् -**

कादम्बर्यामिन्द्रायुधाश्ववर्णनेन तुरग शास्त्रानुरूपमुत्तमाश्वस्य सकलगुण-मुल्लिखति। ऊर्ध्वकरपुरुषप्राप्यपृष्ठभागः घुर-घुर- हेषारवायमानः प्रस्तरोत्तङ्कित मुखभागः रक्तवर्ण लम्बसहाधारितः इत्यादिकमनेक श्रेष्ठ गुण युक्तो वर्तते इन्द्रायुधाश्वः। तद्यथा- अतिप्रमाणं ऊर्ध्वकर पुरुष प्राप्यपृष्ठभागम्।[6]

परिमाणवशादुत्तममध्यमाधम वर्गेषु विभाजितो भवति अश्वः। तद्यथोक्तं कौटिल्येन-द्वात्रि शंदङ्गुलं मुखमुत्तमाश्वस्यपंचमुखा न्यायामः। विंशत्यङ्गुला जङ्घाचतुर्जङ्घ उत्संधः त्र्यङ्गुलावरं मध्यमा वरया। शताङ्गुलः परिमाणाः पञ्चम मध्यमानरयोः।[7] तस्यवेगेनैव उत्तममध्याधमवर्गेषुविभाजनं भवति।[8] अस्यैव वर्णनं प्राप्यते कादम्बरी कथायाम्। यथा- अतिनिष्ठुरेण मुहुर्मुहुः प्रकम्पितोरन्ध्रेण हेषारवेणपूरितभुवनोदरविवरेण निर्भर्त्सयन्तमि वालोकवेग-दुर्विदग्धंगरुत्मन्तम्।[9] बाणभट्टः तस्यखुरान्कृष्ण शिलावत्तथा च पृथिवी पतन शब्देन वाद्याभ्या संवर्ण यति।[10] एवमेव हेषार वंधूत्कारं उदर कम्पनं मुखनिर्गतधवलकेनं सुन्दररक्त वर्णंगण्डूषंचरणबन्धितनूपुरध्वनिं श्रमजलंसुन्दराभूषणविभूषितं विस्तरेण विवेचितम्। एवं प्रकारेण इन्द्रायुधंसर्वोत्कृष्टगुणापेतं सकलभुवनरत्नमिव विवेचितवान्कादम्बर्याम्।[11]

**गन्धमादनहस्तिवर्णनम्-**

अत्रकविः गन्धमादनगजस्य वर्णनं करोति गन्धमादनः कुशल संगीत शास्त्रज्ञवत्संगीतं श्रृणोति। यथा सङ्गीतज्ञः नेत्रनिर्भील्य मुखं करतले संस्थाप्य दत्तचितेन सङ्गीतं श्रृणोति तथैव गन्धमादनोऽपि नेत्र निमील्य सुण्डंदत्ते संस्थाप्य शृणोति। तद्यथा- आनालस्तम्भनिषण्णेनचनवजलधरघोषगम्भीरम्, अनुगत वीणावेणुरवरम्यम्, आस्फालितघर्घरिकाघर्घरम्, अनवरत मृदुमृदङ्गहटानिम् आमीलितलोचनत्रिभागेणवामदशनकोटिनिषण हस्तेननिश्चलकर्णतालेना कर्णयता।[12] तस्य पृष्ठ भाग स्थित- कम्बलेनसः विन्ध्याचल पर्वतइव शोभते। तस्य

कर्णयुगलं मदजलेन रञ्जितं ललाटं चन्द्रबिम्बस्यचुम्बनं कुर्वन्तं मेघमिव शोभते। कर्णस्थितं स्वर्णमयम् अंकुशंकर्णा भूषणे धारयति इतिप्रतीयते। मदजलमलिन गण्डस्थलस्य समीपे आवर्तयन्भ्रमर समूहः द्वितीयचामरस्य निर्माणं करोति।[13] इत्यादीनि गन्धमादनगजस्य अनेकानि वैशिष्ट्यनिसन्ति तान्यत्रवर्णितानि। एवं प्रकारेण साध्यवर्गे कविः जन्तूनां सम्पूर्णं चित्रं रचयति। तेषां कृते अनेकेषां मौलिकोत्प्रेक्षोपमादीनां योजनां करोति सः। अनेनतस्य वर्णने रोचकतायाः नवीनतायाः आह्लादकतायाश्चसञ्चारोजायते।

**साधन रूप जीव जन्तूनां विवेचनम्**

अस्मिन वर्गे कविः साधनरूपे जीवजन्तूनां वर्णनं करोति। अयंवर्गःसाध्यस्य- सिद्धौसहाय्यं करोति। अस्मिन्वर्गे अनेकेषां जीव जन्तूनां ग्रहणं करोति बाणभट्टः क्वचिदुपमारूपे वाक्वचिदुत्प्रेक्षारूपे वा क्वचिद प्रस्तुत प्रशंसादिरूपेवा। कादम्बर्यांये जीव जन्तुवः उपन्यस्ताःते एते-शुकसारिका-हंस-कोकिल-काक-कपोत-कुक्कुट-मयूर-चातक-कुरर-गरुण-श्येन-बक- नीलकण्ठ-भृंगराज- भरद्वाज-उलूक-चटकेत्यादिखगाः। गो-महिष-अजा-उष्ट-गज-अश्व-वृषभ-श्वानेत्यादयः ग्राम्यपशवः सिंह-व्याघ्र-केशरी-मृग-ऋच्छ- वानर-श्रृगाल-वराह-शशक-गण्डक- शल्यादयःवन्यजीवाःसर्प- वृश्चिकेत्याःसरीसृपाः। मीन-मकर-प्रवालेत्यादयः जलचरजन्तवः। इत्यादीनां जीवजन्तूनां अभावेकादम्बर्याः एकवाक्यमपिपूर्णं भवितुं न शक्नोति। तद्यथा- कादम्बर्याः प्रथम वाक्ये एव राजहंस- दिग्गज-गरुणादिकंगृहणाति। कमलयोनिरिवविमानीकृत राजहंस मण्डलः। दिग्गज- इवानवरत प्रवृत्त दानाद्री कृतकरः।..... वैनतेयइवविनतानन्दजननः।[14]

अनेन प्रतीयतेयत्कादम्बर्यां सवत्रैव जीवजन्तूनां विवेचनं करोति। अनेनबाणभट्टस्य जीवजन्तुविषयकचेतनाप्रकटिताजाता।

**जीवजन्तूनां कथाविन्यासे अवदानम् -**

यत्र कथा दुरुहा क्लिष्टा तत्र कविः पशुपक्षिजन्तूनां योजनया रोचकतां उद्भावयति। यथाचन्द्रापीडः कादम्बरी मिलनावसरे परिहास शुक-कालिन्दी-सारिका-व्याजेननवभाषितं क्रीडालापं करोति।[15] कविः कथायाः वृदधयर्थं पशुपक्षि जीवजन्तूनां आश्रयं स्वीकरोति। अनेनैवस इन्द्रायुधाश्वस्ययोजनां करोति। सः कपिञ्जलस्य अवतारं इन्द्रायुधाश्वरूपे कारयतियेन कथायाः वृद्धिः भवेत्। यथा इन्द्रायुधरूपे अवतरतिकपिञ्जलः किन्नर मिथुनानुगमनसमये चन्द्रापीडं

महाश्वेतायाः समीपेनयतियेन वैशम्पायन- महाश्वेतयोः मेलनंभवेत्। अनेन प्रतीयतेयत्कविः कथा विन्यासाय जीवजन्तूनां ग्रहणं करोति। उभयोः जीवयोः साध्य रूपे कथा विन्यासे योगदानं वर्तते। परन्तु साधनरूपे कविः अनेकेषां जीवजन्तूनां वर्णनं करोति। येषां कथायाः प्रतिवाक्यं योगदानं वर्तते। अरण्यादिवर्णनं जीवजन्तूनां वर्णनं विना अपूर्णं प्रतीयते। यथा अरण्याखेटादि वर्णन प्रसङ्गेयावत् जीव जन्तूनां विन्यासो न भवति तावत्इदं वर्णनं अपूर्णम्। अतः बाणभट्टः विन्ध्याटवी प्रसङ्गेगज-सिंह- गण्डक-ऋच्छ- मृग-वराह-वानर- शशक- शुक-कोकिल- मयूर- इत्यादीनां विन्यासं करोति।[16] चन्द्रापीडस्यआखेटसमयेकविः गज-सिंह-मृग-सूकर- श्वानेत्यादीनांविन्यासंकरोति।[17] आश्रम वर्णने कविः मृग- शुक-सारिका-गो-वृषभ- भ्रमर-कपोत- इत्यादीनां जीवजन्तूनां विन्यासं करोति।[18] उज्यिनीनगरवर्णने कविः मयूर- शुक- सारिका- सारस- कलहंस- चक्रवाक युगल-गज-अश्व- भ्रमर-गरुणेत्यादीनांविन्यासमकरोत्।[19] पम्पासरोवर- अच्छोदसरोवरवर्णनाव सरेकविः कलहंसभ्रमर- चक्रवाक- जलचरपक्षि- सारस- मयूर- गज-अश्व- मृग-वृषभ-महिष- वानर- व्याघ्र- सिंह- वराह- मत्स्यमकर-कृच्छप- सर्पेत्यादीनां विन्यासं करोति।[20] प्रभातवर्णनावसरेकविः वृद्धहंस- रंकुमृग- सिंहगज-गर्दभ- कपोत- वन्यमहिष - भ्रमर- मयूर- शुक- शावक- इत्यादीनां विन्यासं करोति।[21] सन्ध्या वर्णने कविः कपोत-हारीतपक्षिचक्रवाक युगल हंस युगल इत्यादीनां विन्यास करोति कविः।[22] एव ंप्रकारेण निष्कर्ष रूपेण वक्तुं शक्यते यत्सम्पूर्णकादम्बरीकाव्ये कथा विन्यासे कविः जीवजन्तूनां सहायकः। जीवजन्तूनाम् अभावे कथा समूलनष्टा भविष्यति। अतः कथाविन्यासे जीव जन्तूनाम् महद् अवदानं वर्तते। कादम्बरी काव्यसौन्दर्ये जीव जन्तूनां योगदानम् -

काव्यस्य सौन्दर्यं ध्वनि-रस-गुण-अलङ्कारादयः वर्धयन्ति। एतेषां काव्य सौन्दर्य वर्धक- तत्त्वानां कादम्बरी काव्ये यथा स्थानं प्रयोगोविद्यते। परन्तु यत्र कुत्र चित् जीवजन्तूनां वर्णनं भवति तत्रतुतद्विशेषरूपेण प्रयोगं करोति कविः। तद्यथा-

**रसाभासध्वनिः -**

रसःभवतिकाव्यस्यआत्मा।[23] अस्य रसस्य ग्रहणं अष्ट ध्वनिषु भवति। ये रसादि अष्ट ध्वनयः ते एते-रस भावतदाभासभावशान्त्यादिरक्रमः।[24] एतेषु एकः प्रभेदः वर्तते रसाभासः। यत्र पशुपक्षिणां रतिः विद्यते तत्र रसाभासध्वनिः भवति। कादम्बरी कथायां महाकविः कालिन्दीसारिका परिहास शुकयोः रतिं वर्णयति।

अत्रतयोः परस्परं बहुविधमालापं विद्यते। उभयोः प्रेम कलहः दृश्यते। प्रसङ्गेऽस्मिन्नसाभास ध्वनिः व्याज्यते।

**वात्सल्यरसः-** शुकजन्म प्रसङ्गेशुकस्य जनकः स्वाप्रत्यस्य प्राण रक्षणाय बहुविधं प्रयासं करोति अत्यधिकं चस्निह्यति। अत्रवात्सल्य रसस्य व्यञ्जना भवति।

**करुणरसः**

वैशम्पायनशुकजन्मसमये वृद्धशबरः शुकपितरं हन्ति, प्रसङ्गेऽस्मिन् कविः करुणरसं व्यञ्जति। अत्र विषयालम्बनः शुकपिता आश्रयालम्बनः वैशम्पायनशुकः उद्दीपनविभावः मृत देहः अनुभावाः जडता श्रुपातेत्यादयः शोक स्थायि भावं पोषयन्ति। परिपुष्टः शोक स्थायिभावः करुणरसे परिणतो भवति।

**भयानकरसः-** शबरमृगया वर्णनावसरे कविः शुकपितृमत्युसमये कविः भयानकरसस्य व्यञ्जनां करोति।[25] अत्र आश्रयालम्बनशुकपिताविषयालम्बनः वृद्ध शबरः तद् मृगयादि उद्दीपन विभावः स्तम्भन- स्वेद - अश्रुपतनादि अनुभावाः। जुगुप्सास्थायिभावः एभिः परिपुष्टाभूत्वा भयानकरसदशांप्राप्नोति। अनेन रसयोजनायां जीवजन्तूनां योगदानं दृष्टिगोचरं भवति।

**गुणः -** गुणाः रसस्यधर्माः भवन्ति। काव्ये तेषां स्थितिः अचलाः भवन्ति। काव्यस्य उत्कर्ष हेतवः भवन्ति। तद्यथा- ये रसस्याङ्गिनोधर्माः शौर्यादय इव आत्मनः। उत्कर्षहेतवः तेस्युः अचलस्थितयो गुणाः।[26] शृङ्गारकरुण विप्रलम्भादिषुमाधुर्य गुणः विराजते। वीरबीभत्सरौद्ररसेषु ओजोगुणः विराजते। प्रसादगुणः सर्वेषु रसेषु भवति। कादम्बरी कथायामपि जीवजन्तुविन्यासे यथो चितं रसव्यञ्जना व सरेकविः माधर्युदिगुणैः काव्यसौन्दर्यं वर्धयति। असमास मध्यमसमासदीर्घसमासपदरचनाभिः।

**अलङ्कारः -**

अलकाराःशब्दार्थयोःधर्माःभवन्ति। काव्येतेषां स्थितिःचलाभवति। काव्यस्यशोभां वर्धयन्ति। तद्यथा -

**उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।**
**हारादिवदलङ्कारास्तेतेऽनुप्रासोपमादयः।।**[27]

एते अलङ्काराः शब्द चमत्कारेण काव्यशोभां वर्धयन्ति कुत्रचिच्च अर्थचमत्कारेण। जीवजन्तूनां अलङ्कारविन्यासे महद्योगदानं वर्तते। अतः कविः जीवजन्तूवर्णनप्रसङ्गे अनुप्रास- उपमा-उत्प्रेक्षा-रूपक-काव्यलिङ्ग- अतिश्योक्ति

समासोक्ति स्वभावोक्ति- अर्थान्तरन्यास- विभावनादीनाम् अनेकेषामलङ्काराणां प्रयोगं करोति। तद्यथा -

**अनुङ्कासः-**

अन्तःस्खलित-मुखर खलीनखर-शिखरक्षोभजन्मनोलाला जलभुवः फेन पल्लवान्।[28]

**उपमा-**

अतिकुटिलकनकपत्रलताप्रतानभङ्गुरेण पदे पदे रणित रत्नमालेन स्थूल मुक्ताफल प्रायेणता रागणेव सन्ध्यारागम्।[29]

**उत्प्रेक्षा-**

आननमण्डलनिहितारूणमणि समुद्गतैर शुक्ला पैरूपेतेनावसक्त चामरेणेव निश्चलाशिखरेण कर्णयुगलेन विराजमानम्।[30]

अनेन निष्कर्ष रूपेण वक्तुं शक्यतेयत्कविः काव्यसौन्दर्यं वर्धनाय एव कादम्बरी कथायां जीव जन्तूनां ग्रहणं करोति। जीवजन्तुं विनाकाव्याशोभान आयाति। अनेन काव्यसौन्दर्ये जीवजन्तूनां योगदानं अतीव वर्तते। एवं प्रकारेण कादम्बरी कथायां जीव जन्तूनामवदानं प्रमाणितं भवति।

**सन्दर्भग्रन्थाः -**


1. *कादम्बरी कथामुखभागः, पृ. 54*
2. *काद.कथा. शुकवर्णनम्, पृ. 36 पं. 5*
3. *तत्रैवपृ. 41 पं. 6*
4. *तत्रैव. पं. 37 पं.7*
5. *तत्रैव. पं. 37 पं. 5*
6. *काद. कथा इन्द्रायुधवर्णनम् पृ. 239 पं. 1*
7. *कौटिलीय अर्थशास्त्रम् द्वितीयाधिकरणं पञ्चाशत प्रकरणम् 8*
8. *तत्रैव 22*
9. *काद. कथा इन्द्रायुधवर्णनम् पृ. 242*
10. *तत्रैव 241*
11. *तत्रैव 243*
12. *काद. पूर्वराजकुलवर्णनम्पृ. 265*

13. *तत्रैव 266*
14. *कादम्बरीकथामुखभागः पृ. 11,12, 13*
15. *कादम्बरी एकसांस्कृतिकअध्ययन (वासुदेव.) पृ. 198*
16. *कादम्बरी विन्ध्याटवी वर्णनम् पृ. 55*
17. *कादम्बरी पूर्वार्द्धेः चन्द्रापीडाखेटवर्णनम् पृ. 303*
18. *कादम्बरी पूर्वार्द्धेः अगस्त्याश्रमवर्णनम् पृ. 64*
19. *काद. पू. उज्जयिनीवर्णनम् पृ. 165*
20. *काद. पू. अच्छोदवसरोवर वर्णनम् पृ. 374*
21. *काद. कथामुख. प्रभातवर्णनम् पृ. 79 पं.3*
22. *काद. पू. पुनः सन्ध्या वर्णनम् पृ. 590*
23. *साहित्य दर्पणः 1/3*
24. *काव्यप्रकाशः 4/26*
25. *शुकशावकनिपातवर्णनम् पृ. 102*
26. *काव्यप्रकाशः 8/66*
27. *काव्यप्रकाशः 8/67*
28. *काद.पू. इन्द्रायुधवर्णनम् पृ. 240*
29. *काद.पू. इन्द्रायुधवर्णनम् पृ. 241*
30. *काद.पू. इन्द्रायुधवर्णनम् पृ. 240*

# 9

# लब्धंवधूपदम्

***रामहेतगौतमः***

यथार्थ चित्रणाग्रगण्यः मृच्छकटिककारः पञ्चम्यां शताब्द्यां अभूत्। मृच्छकटिकम् सम्प्रति रूपक काव्येषु महनीया रचना। सप्तप्राकृत (मागधी, अवन्तिका, प्राच्या, शौरसेनी, अर्धमागधी, वाह्लीक, महाराष्ट्री) समन्वितसंस्कृतकृतिरियंचारुदत्त-वसन्तसेनयोः प्रणय- परिणय मार्गे गच्छन् तत्कालीन-राजनीतिक-सामाजिक-दशामुद्घाटयति। ब्राह्मणाः -

**'सत्यंदानं क्षमा शीलमनृशंस्यंतपोऽघृणा।**
**दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इतिस्मृतः।।**

इति महाभारते वनपर्वे-180.21 छन्दोबद्धं व्यासवाक्यं न पालयित्वापतिताः चौरकर्मादिषुप्रवृत्ताः जाताः। मृच्छकटिके चतुर्थेऽङ्के विदूषकः कथयति यत्-ही ही भोः! तपश्चरण क्लेश विनिलजतेन राक्षसराजो रावणः पुष्पकेण विमानेन गच्छति; अहंणाऽकृत तपश्चरण क्लेशोऽपि नर-नारी जनेन गच्छामि।[1] राजन्योऽपि रक्षणं विहाय दुष्टतांविधाय शकारसदृश-लम्पटानांसहायकाः जाताः। धनिकाः वेश्यागमनासक्ताः, रोजगारहीनाः स्थाने-स्थाने द्यूतकर्म प्रवृत्ताः पुनर्ब्राह्म आसन्। मदिरा नागरिकानांमतिं हरतिस्म। दासानां क्रय-विक्रयं भवति स्म। शासकानां उदासीनतावशात् लोककल्याण कार्याणि चारुदत्त-सदृशजनाऽऽश्रितानि आसन्। जातिवादोऽपि शीर्षमारुह्यनृत्यतिस्म। मृच्छकटिके-6.20तः 6.24 पर्यन्तं वीरक-चन्दनकयोः संवादे दृष्टमिदम्। स्त्री भोग्यास्पृश्या परन्तु तस्याः सम्बन्धिनः अस्पृश्याः। मृच्छकटिके चतुर्थेऽङ्के विदूषकः भणति यत्-कियत् तपश्चरणं कृत्वावसन्त सेनायाः भ्राता भवति। अथवा मातावत्, यद्यपि एष उज्ज्वलः स्निग्धश्च तथापि श्मशानवीथ्यां जात एव चम्पकवृक्षः अनभिगमनीयो लोकस्य।[2]

शाक्यश्रमण-संवाहक-जीवनेन स्पष्टं भवति यत् दृढ़ प्रतिज्ञ-सत्याश्रयी-धीर-संकल्पी-भिक्षुकाः धर्मपालन-द्वारा स्त्रीन्प्रतिदारुणाः जाताः। संवाहकः मूच्छितां वसन्तसेनां परिचरन्न पितां न स्पृशति।

धूता यद्यपि अभावग्रस्ता तदपि सा सम्माननीयाजन पद जनेषु। पतिंचारुदत्तं प्रति समर्पिताऽस्ति। तस्यापतिः गणिका गृहं गच्छति इति जानन्नपिसा न व्यथिता। पत्युः कीर्तिकृतेः बहुमूल्य रत्नहारंदातुं न शंकिता। वसन्तसेनामपि स्वीकरोति सा पतिव्रता। एक एव तस्याः गौरव हेतुः 'धूताऽस्तिकुलवधू'। रूपकस्य मृच्छकटिकस्य 3.26 परेचारुदत्त वधू-धूता 'वधू' इतिसंज्ञया संवादं करोति। वसन्तसेनापि तं वधूपदमभिलषति। मृच्छकटिकस्य पूर्णताऽवसरेबाल- कदलीव-गामिनी-वसन्तसेनयाप्राप्यतेवधूपदमिदम्। तस्मिनवसरे ब्रूते शर्विलकः- आर्ये! वसन्तसेने! परितुष्टो राजा भवतीं वधूशब्देनानुगृह्णाति। वसन्तसेना-अज्ज! किदत्थम्हि। (आर्य! कृतार्थास्मि।)[3]

मदनिकाऽपि वधूपदेनालंकृता-वसन्तसेनामदनिकां शर्विलकाय समर्पयन्-संपदं तुमं ज्जेव बन्दणीआ संवृत्ता। तागच्छ। (साम्प्रतंत्व मेव वन्दनीया संवृता। तद् गच्छ।) सु–दृष्टः क्रियतामेष शिरसा वन्द्यतांजनः। यत्र तेदुर्लभं प्राप्तं वधूशब्दाव-गुण्ठनम्।।[4]

संवादोऽयमसामान्यं वर्तते। कोविशेषोऽत्र? वसन्तसेनाऽस्ति एका गणिका। गणिकायाः कृते 'वधूसंबोधनं महनीयमेव। गणिकाजीवनज्ञानेन विना तस्या कृतेवधूसंबोधनस्य वैशिष्टयं कथं ज्ञायते? अन्यतरः प्रश्नः प्रतनोति यत् वधू शब्दस्यार्थः कः? 'वधू' स्त्री उह्यतेपितृगेहात् पतिगृहं वह् द् ऊ-धुकच्। भार्य्यायाम्, नवोढायांपुत्राजायायाम् अमरः। इतिवाचस्पत्यम्। वहति, उह्यते, वा वधूः 'पृक्रा च महिलावधूः'' अमरकोषे।[5] 'स्त्री वधूर्योषितारामा' अमरकोषे एव।[6] वहतीति विग्रहे वहतेः कर्तरि 'वहोधश्चेति' ऊ प्रत्ययेऽऽहत्य धादेशे च वधू 'वधू स्नुषा नवोढा स्त्री भार्या पृक्राङ्गनासु च' अमरकोषे।[7] 'वधू' इति शब्दस्य रघुवंशमहाकाव्ये 'दुलहिन' अर्थेप्रयोगः विद्यते यत् वरः स वध्वा सह राजमार्गं प्राप---।[8] समानयंस्तुल्यगुणं वधूवरं—अभिज्ञानशाकुन्तले।[9] पत्नी अर्थे-कुमारसंभवे रघुवंशे च।[10] पुत्रवधू अर्थे-उत्तररामचरिते।[11]

अनेन मार्गेणव यंल ब्धामहे यत् वधू शब्दस्य प्रयोगः परिवारेकुले वा सम्मानितायाः स्त्रियाः कृतेप्रयुक्तः भवति। सा स्त्री या वैवाहिक बन्धने बद्धाऽस्ति।

या धारयति जीवन दायिनीं शक्तिं योग्यताञ्च। या क्षणे-क्षणेपत्युः संगिनीसाधिताच। 'वधू' वधात् त्रायतेसावित्रीवत्। कुलवधू, पुत्रवधू, नगरवधू इत्यादीनि नामानि अपि प्राप्यन्ते।

दशरूपककारः वेश्या-गणिकयोः भेदं स्वीकरोति। वेशो भृतिः सोऽस्याजीवनमिति वेश्या तद्विशेषोगणिका। किन्तु मृच्छकटिके वसन्तसेना विषये भेदाऽयं न विद्यते। तस्याः कृते उभौ भेदौ प्रयुज्येते।

नवमाऽङ्के न्यायाधीशस्य 'आर्य, गणिका तव मित्रम्?' प्रश्ने चारुदत्तः लज्जितः जातः। अनेन व्यवहारेण स्पष्टं जातं यत्- तत्कालीन समाजे गणिका मैत्री न सम्मानहेतुः। गणिका अपि असन्तुष्टाः अनेन। वधूपदमाप्तुं ताः लालायिताः भवन्ति स्म। वसन्तसेना मदनिका च अस्य पदस्य कृते लुब्धे आस्तां। ताभ्यां योऽपि जनः मानहेतुः तं प्रति तयोरनुरागः। वसन्तसेना राजश्यालस्य शकारस्य प्रस्तावमस्वीकृत्य दरिद्र चारुदत्तं वाञ्क्षति। मदनिकाऽपि शर्विलकं समर्पिताऽस्ति। शर्विलक-चारुदत्तयोः पौरुषमेव यत् समाजनिन्दा भयमविचिन्त्य गणिकां वधूकर्तुं उद्येते। वसन्तसेनायाः पार्श्वेधनमासीन्नासीन्मानं यदासीत् वधूनां। तस्याः सम्पत् कुबेरसमाऽऽसीत्। सा खुण्टमोडकनाम-गजवाहिनी। वसन्तसेनायाः गृहवर्णनावसरे चतुर्थे अङ्के विदूषको कथयति-किं तावद् गणिकागृहम् अथवाकुबेर-भवन-परिच्छेद इति। रूपे उज्जयिनी भूषणं-

**बालां स्त्रियं च नगरस्य विभूषणं च।**
**छादिता शरदभ्रमेण चन्द्रलेखेव दृश्यते।।**[12]
**उदारहृदया-वसन्तसेना-विषयेविटस्य कथनमस्ति-**
**दाक्षिण्योदकवाहिनीविगलिता यातास्वदेशं रतिः।**
**हा हालङ्कृत-भूषणे! सुवदने! क्रीडारसोद्भासिनि!**
**हासौजन्यनदि! प्रहासपुलिने! हामा–शामश्रये!**
**हाहा नश्यतिमन्मथस्य विपणिः सौभाग्यपण्याकरः।।**[13]

'नगरश्री'[14] मृच्छकटिके 2.15 पूर्वे वसन्तसेनायाः कथनं यत्-दुर्लभा-गुणाविभवश्च। अपेयेषु तडागेषु बहुतरमुदकं भवति। कथनेनानेनस्वष्टं यत् सा गुणग्राहिणी।

शरणागतस्य संवाहकस्य आश्रयदात्री, कुशलाचित्रकारिणी[15] कर्णपूरकपरिहासेऽपि सा तर्कयित्वा मदनिकां शर्विलकाय दाता-तर्कशीला,

मृच्छकटिके 2.20 परे कर्णपूरकेन सह संवादेजातीकुसुमवासित-प्रवारके उत्तरीये वस्त्रे अङ्कितं चारुदत्त नाम वाचयित्वा प्रावृणोति। इत्यनेन विज्ञापिता सा सुशिक्षिता। मृच्छकटिके- 4.30तः 4.32 पर्यन्तं स्त्रियाः संस्कृत पाठमनभिरोचमानेन[16] विदूषकेन सह संस्कृत-संभाषिणी, इहगन्धर्वाप्सरोगणैरिव विविधालङ्कारशोभितैः गणिकाजनैः बन्धुलैश्च यत्सत्यंस्वर्गायते इदं गेहम्।[17] इतिवाचा सिद्धं यत् वसन्तसेना वैभव समपन्नासीत्। 'एता हसन्ति च रुदन्ति च वित्तहेतोः-----वेश्या श्मशान-सुमना इव वर्जनीयाः।[18]' इति शर्विलकस्य कथनं मिथ्या-सिद्धीकर्त्री प्रेयसी वसन्तसेना। रूपकस्यास्य प्रथमाङ्के 1.32 परे शकारः कथयति यत् भाव! भाव! एषा गर्भदासी कामदेवायतनोद्यानात् प्रभृतितस्य दरिद्र चारुदत्तस्य अनुरक्ता, न मां कामयते। वसन्तसेना कथयति-गुणः खलु अनुरागस्य कारणम्, न पुनर्बलात्कारः।[19] धूतां प्रति भगिनीभावः रोहसेनं प्रतिवात्सल्यभावः संवाहक-विदूषकौ प्रति सादरभावं वहति सा। वसन्तसेना सर्वेषां समादरं करोति। किन्तुलोकस्य दृष्टिः तां प्रति न सम्यकम्। यथा वदति विटः कृत्वंवापीव लतेव नौरिवजनं वेश्यासि सर्वं भज।[20] चतुर्थेऽङ्के 4.31परे विदूषकः मनसिचिन्तयति-सुष्ठु उपलक्षितं दुष्टविलासिन्या। गणिका नाम, पादुकान्तर प्रविष्टाइवलेष्टु का दुःखेनपुनर्निराक्रियते। अपि च भोवयस्य! गणिका, हस्ती, कायस्थः भिक्षुः चाटः, रासभश्च यत्रैतेनिवसन्ति, तत्र दुष्टाअपि न जायन्ते।[21] यस्यार्थस्तस्य सा कान्ता, धनहार्यो ह्यसौजनः। एनं लोक भावमेव मनसिधार्य चारुदत्त गेहेविचिन्तयति वसन्तसेना- 'अभागिनी खल्वहं तवाभ्यन्तरस्य'[22] वसन्तसेना अस्मात् तिरस्कार भावात् मोक्षं इच्छति। अतएव चारुदत्तानुरक्ता विचिन्तयति-उदयन्तु नाम मेघाः भवतुनिशा वर्षमविरतं पततु। गणयामि नैव सर्वं दयिताभिमुखेन हृदयेन।[23] तस्याः बुद्धोपासिकायाः कृते वधूपदमेव निर्वाणपदम्। चारुदत्तः अस्यपदस्य साधनम्। मरणासन्नाऽपि चारुदत्त रक्षार्थ पौरुषं करोति। पौरुषसिद्धिं कुलवधू पदमाप्नोति सा। स्त्र्याः अधिकाराः पुरुषसमं न तस्याः शिक्षा प्राथमिका न तदपितस्याः विषयेलोकोक्तिरियं- स्त्रियोहि नाम खल्वेता निसर्गादेव पण्डिताः।[24] प्रेम-उदात्तचरित-उदारता-त्यागादिगुणैः गणिकाकुल-कालिमां प्रच्क्षाल्य एकं साध्वीनारीपदमलंकरोति। सहर्षं प्रसन्नमना वसन्तसेना वदति यत्-संपदं जीवाविदम्हि। (साम्प्रतं जीवापिताऽस्मि) सम्पूर्णसिद्धिः चारुदत्तमुखेन प्रस्फुटति-अतः परमपि प्रियमस्ति? लब्धा चारित्र शुद्धिः।

निष्कर्षतः कथयितुं शक्यते यत् शीलमेव उत्तममाभूषणं। शीलं विना कोऽपि सामाजिकप्रितिष्ठां लब्धुं न समर्थः। सामाजिकी स्वीकार्यतां विना न मानं। मानंविना का समृद्धिः का सुरक्षा, का शिक्षा? एकस्यापि न औचित्यम्। औचित्यहीनत्वात् न गुणः न संस्कारः। यस्य न गुणः न संस्कारः तस्य कः धर्मः। धर्मेणहीनः पशुभिः समानः। नरस्य पशुजीवनं किं जीवनम्। अस्मात् जीवनात् मुक्ति हेतोः शीलमयं जीवनमेव साध्यम्। इदंगणिकागारे न शक्यम्। गणिकागृहात् निःसृत्य चारुदत्तगृहंलब्ध्वा तया लब्धंवधूपदम्। इति सिद्धिः।

**सन्दर्भग्रन्थाः -**


1 *मृच्छकटिके अङ्के - 4.27 परे विदूषक-कथनम्। 3.16 पूर्वेऽपि।*

2 *मृच्छकटिके 4.29 पूर्वे विदूषक-कथनम्।*

3 *मृच्छकटिके-10.58 अनन्तरे शर्विलक-वसन्तसेना-संवादः।*

4 *मृच्छकटिके- 4.24*

5. *अमरकोषे 2.4 (133) व्याख्याभागः।*

6. *अमरकोषे 2.6 (2)*

7. *अमरकोषे 3.3 (109)*

8. *रघुवंशे महाकाव्ये- 7.4*

9. *अभिज्ञानशाकुन्तले। 5.15*

10. *कुमारसंभवे-6.89 रघुवंशे-1.90*

11. *उत्तररामचरिते- 4.16*

12. *मृच्छकटिके- 8.23*

13. *मृच्छकटिके-8.38*

14. *मृच्छकटिके-8.39*

15. *चारुदत्तचित्रं मदनिकांदर्शयति। चारुदत्तः देवपूजकः वैदिकः( मृच्छकटिके- 1.16) तदपि बुद्धोपासिका तस्य प्रेमरागिणी।*

16. *विदूषक-ममतावद्वाभ्यामेव हास्यं जायते। स्त्रिया संस्कृत-पठन्त्या, मनुष्येण च काकलीगायता। मृच्छकटिके-3.4 पूर्वे पूर्वेविदूषककथनम्।*

17. *मृच्छकटिके-4.28 पूर्वेविदूषककथनं।*

18. *मृच्छकटिक- 4.14*

19. *मृच्छकटिके- 1.32 परे वसन्तसेनायाः कथनम्।*

20. *मृच्छकटिके-1.32*

21. *मृच्छकटिके-5.7 परे विदूषकवचनम्।*

22. *मृच्छकटिके-1.53 पूर्वे वसन्तसेनायाः स्वगतम्।*

23. *मृच्छकटिके-4.32*

24. *मृच्छकटिके-4.19*

# 10

# विद्या प्रादुर्भवेत्तेषाम्

*दयानिधिशर्मा*

कलौ क्रमशः मनुष्याणाम् आयुषः क्षयः सञ्जातः। चरकसंहितायां 'विमानस्थाने' प्रोक्तमस्ति यत् कथं शनैः शनैः कालानुक्रमेण जगति परिवर्तनमागतमिति। धर्मपादस्य. क्षीणत्वमपि संसारे सर्वत्र दृश्यते। जनाः धर्माचाररताः न वर्तन्ते। आचारहीनाः सञ्जाताः। आयुषः ह्रासः अनेन एव कारणेन जातः। यथोक्तम्; वर्षशतं खल्वायुषः प्रमाणमस्मिन्काले। इति एतच्च कलिकालादौ परमायुः। कालस्य यथा यथा क्षयः तथा तथा आयुषः क्षयः-यदाह-संवत्सरशते पूर्णे याति संवत्सरःक्षयम्। देहिनाम् आयुषः काले यत्र यन्मानमिष्यते।

**विद्यायाः वैशिष्ट्यम्**

अस्मिन् संसारे आत्महिताभिलाषी सर्वदा विद्यायै यतते। इयं विद्या आचारपूर्णमनसा एव प्राप्यते। आचारवान् एव सर्वदा वेदादीनां फलमश्नुते। अतः जीवने कदापि आचारहीनः कोऽपि न भवेत्;

**आचाराद्विच्युतो विप्रो न वेदफलमश्नुते।**
**आचारेण तु संयुक्तः सम्पूर्णफलभाग्भवेत्।।**

*(मनुस्मृतिः 1/109)*

आचारशीलाः जनाः शीघ्रमेव विद्यायाः बहूनि रूपाणि ज्ञातुं समर्थाः भवन्ति। जीवने बहुविधकर्माणि कर्तुं ते उद्युक्ताः भवन्ति। प्राचीनकाले तपश्चर्यारताः ऋषयः अपि आचारपथमेव अनुसरन्ति स्म।

**सर्वस्य तपसो मूलमाचारं जगृहुः परम्।**

*(मनुस्मृतिः 1/110)*

उपर्युक्तानुसारं विद्यायाः वैशिष्ट्यं सर्वदा आचारेण एव सिद्ध्यति। पूतेन मनसा विद्याध्ययनं कर्तुं धर्मशास्त्रीयम् आचारचिन्तनम् अवश्यमेव करणीयम्।

**विद्याभ्यासिनः नित्ययुक्ताः**

विद्या अविद्या च भेदद्वयं वर्तते। प्रायशः संसारे केचन प्रवृत्तिमार्गम् अनुसरन्ति केचन निवृत्तिमार्गं च। ये प्रवृत्तिमार्गमेव अनुसरन्ति तस्मिन् निरताः वा भवन्ति ते सर्वदा अविद्यायाः नियन्त्रणे एव तिष्ठन्ति । पुनश्च निवृत्तिमार्गगामिनः विद्यायामेव रताः भवन्ति। ते निवृत्तकामाः उत्तमं जीवनं यापयन्ति। ते सर्वदा विकारहीनाः भूत्वा भक्तिमार्गमपि अनुसरन्ति। अध्यात्मरामायणे प्रसिद्धमस्ति;

**रामा माया द्विधा भाति विद्याविद्येति ते सदा।**
**प्रवृत्तिमार्गनिरता अविद्यावशवर्तिनः।**
**निवृत्तिमार्गनिरता वेदान्तार्थविचारकाः।।**
**त्वद्भक्तिनिरता ये च ते वै विद्यामयाः स्मृताः।**
**अविद्यावशगा ये तु नित्यं संसारिणश्च ते।**
**विद्याभ्यासरता ये तु नित्ययुक्तास्त एव हि।।**

*(अरण्यकाण्डसर्गः– 3, 32, 33)*

प्रायशः बहवः विद्याभ्यासं कृत्वा कुतर्कशीलाः भवन्ति। छद्मभावेन सभायां प्रश्नान् पृच्छन्ति। अपरान् विदुषः पराजितान् कृत्वा ते सुखमनुभवन्ति। तादृशानां का गतिः भवति एतस्य सुन्दरं निरूपणं केदारखण्डपुराणस्य तृतीये खण्डे 150 अध्याये शर्मदत्ताख्येन गन्धर्वेण स्वकथां श्रावयित्वा कृतम्;

**गन्धर्व उवाच**

**शृणु राजन्प्रवक्ष्यामि स्वस्य वै पूर्वकर्मणः।**
**चेष्टितं राजशार्दूल समासाद् गदतो मम[1] ॥112॥**
**पूर्वजन्मन्यभूवं हि ब्राह्मणो वेदपारगः।**
**शर्मदत्त इति ख्यातो नाम्ना वै राजसत्तम[2] ॥113॥**
**अधीततर्कशास्त्रेण मयाऽहङ्कारतो द्विजाः ।**
**पराजिताः कुतर्केण विद्यावन्तोऽतितापसाः[3] ॥114॥**
**ते सर्वे दुःखिता विप्र मामित्यूचुर्नराधिप।**
**यतस्त्वया वयं सर्वे कुतर्केण पराजिताः।**
**ततस्त्वं हि महारण्ये राक्षसो वै भविष्यसि[4] ॥115॥**

**ततोऽहं दुःखसन्तप्तो ब्राह्मणाञ्छरणं ययौ।**
**ब्राह्मणानां च पादेषु पतितोऽहं नराधिप[5] ॥116॥**
**यूयं रक्षत मां विप्रा अपराधिनमेव च ।**
**अतः परं हि भवतां दासोऽहं मुनिसत्तमाः[6] ॥117॥**
**घोरा वै रक्षसां योनिस्तस्या मां विनिवर्तय।**
**इत्युक्त्वाऽहं पुनस्तेषां चरणे पतितो नृप[7] ॥118॥**

**सद्वृत्तमनुष्ठेयम्**

विद्याभिलाषिणः ये सन्ति तेषां कृते सद्वृत्तमावश्यकम्। सद्वृत्तपरिपालनेन फलद्वयं प्राप्यते; (1) आरोग्यप्राप्तिः (2) इन्द्रियविजयः। चरकसूत्रे ये आत्महितं वाञ्छन्ति तेषां कृते निर्देशः कृतः। अयं निर्देशः सद्वृत्तसम्बद्धः वर्तते; तस्मादात्महितं चिकीर्षता सर्वेण सर्वदा स्मृतिमास्थाय सद्वृत्तमनुष्ठेयम्। (च. सू. 8 – 17)

**साधुसङ्गतिरेव अनुसरणीया**

साधूनां सङ्गतिरेव उत्तमा भवति। विद्योपासकानां कृते मार्गोऽयम् उत्तमः। विद्यापारङ्गताः विद्याशीलाः वा महतां सङ्गेन जीवने मङ्गलं प्राप्नुयुः। अनेन बुद्धिः पुनीता भवति। मनः अपि निरन्तरं हर्षमनुभवति। विद्याभ्यासकाले सतां सङ्गः सर्वदा करणीयः। एतादृशं वचनम् अध्यात्मरामायणस्य अरण्यकाण्डे तृतीये सर्गे महर्षिणा अगस्त्येन प्रोक्तम्;

**किं राम बहुनोक्तेन सारं किञ्चिद्ब्रवीमि ते।**
**साधुसङ्गतिरेवात्र मोक्षहेतुरुदाहृता।।**
**साधवः समचित्ता ये निःस्पृहा विगतैषणाः।**
**दान्ताः प्रशान्तास्त्वद्भक्ता निवृत्ताखिलकामनाः।।**
**इष्टप्राप्तिविपत्त्योश्च समाः सङ्गविवर्जिताः।**
**संन्यस्ताखिलकर्माणः सर्वदा ब्रह्मतत्पराः।।**
**यमादिगुणसम्पन्नाः सन्तुष्टा येन केनचित्।**
**सत्सङ्गमो भवेत्तर्हि त्वत्कथाश्रवणे रतिः।।**

*(अध्यात्मरामायणम्, अरण्यकाण्डे 36-39)*

संस्कृतसाहित्ये महाकविः भवभूतिरपि सत्सङ्गतिविषये सुस्पष्टं वदति यत् एतेषांजनानां सङ्गः प्रायशः पुण्येन एव भवितुमर्हति। उत्तररामचरिते तेन प्रमाणीकृतम्;

**सतां सद्भिः सङ्गः कथमपि पुण्येन भवति।**

*(उत्तररामचरितम् 1/2)*

**विगतकल्मषाः**

अध्ययनात् विरतिस्तु कदापि न भवेत्। अध्ययनस्य विशिष्टं क्षेत्रं विद्यायाः महत्त्वपूर्णानि उद्देश्यानि निश्चिनोति। तस्मात् अवश्यमेव ऊर्ध्वां गतिमाप्नोतुं जीवने सर्वदा कालुष्यराहित्यं भवेत्। यदा पापात् मुक्ताः भवन्ति तदानीमेव विपुलं विज्ञानं प्रस्फुटं भवितुमर्हति। विगतकल्मषाः जनाः एव उत्तमां विद्यां प्राप्तुं तत्पराः भवन्ति। तथा च निवृत्तकामाः ये भवन्ति तेषामपि विद्यायाः संस्कारः श्लाघनीयः भवति। तत्फलेन उत्तमकर्माणि कृत्वा सुखविषये दुःखविषये च अविचिन्त्य मानवजीवने मानवाः विद्याभ्यासं कुर्युः। जीवनस्य कृते उत्तमां गतिम् अभिलषन्तः मानवाः किं किं कुर्युरिति हिन्दीभाषासाहित्ये कबीरदासवर्यः 'कबीरवाणी' इत्यस्मिन् ग्रन्थे निरूपितवान्;

**कबीर हरि के नाँव सूँ, प्रीति रहे इकतार।**
**तौ मुख तैं मोती झड़े, हीरे अन्त न पार।।**
**कस्तूरि कुण्डलि बसै मृग ढूँढै बन माहिं।**
**ऐसैं घटि घटि राम है, दुनियाँ देखै नाहिं।।**
**कबीर पढ़िबो दूरि करि, पुस्तक देइ बहाइ।**
**बावन अषिर सोध करि, रैं ममैं चित लाइ।।**
**कबीर सतगुर नाँ मिल्या, रही अधूरी सीष।**
**स्वाँग जती का पहरि करि, घरि घरि माँगै भीष।।**

विविधविद्यालयेषु, महाविद्यालयेषु विश्वविद्यालयेषु च विद्यार्थिनः वर्तमानकाले सदाचाररताः भूत्वा प्रशान्तमनसा विशुद्धबुद्ध्या च अध्ययनरताः स्युः।

**सन्दर्भाः**


1. *उपाध्याय, भगवतशरण (1983), भारतीय संस्कृति के स्रोत, दिल्ली : पीपुल्स पब्लिशिंग हाउस*
2. *उपाध्याय, शुकरत्न (2000), भक्तिरस सिद्धान्त, आगरा : बी. एस. शर्मा एण्ड ब्रदर्स*
3. *कस्तुरे, हरिदास श्रीधर (2003) काय चिकित्सा, वाराणसी : चौखम्बा कृष्णदास अकादमी*

4. *कृष्णकुमार, (1993) केदारखण्ड पुराण (भाग 3), हरिद्वार : प्राच्य विद्या अकादमी. पृ. 180 – 182*
5. *गुप्त, भागवत राम (1998). आयुर्वेद का प्रामाणिक इतिहास, वाराणसी : कृष्णदास अकादमी.*
6. *जैन, आचार्य राजकुमार (1997). योग और आयुर्वेद, दिल्ली : प्राणवाय (जैन आयुर्वेद) शोध संस्थान*
7. *मनुस्मृतिः, प्रथमोऽध्यायः (1996). दिल्ली : जे. पी. पब्लिशिंग हाउस.*
8. *मिश्र, भगवत स्वरूप, कुलश्रेष्ठ, सरोजनी (1992). कबीर वाणी , आगरा : विनोद पुस्तक मन्दिर.*
9. *शास्त्री, प्रभात (1989). अध्यात्म रामायण ( सम्पा. ). कौशाम्बी प्रकाशन.*
10. *शास्त्री, सत्यव्रत (2012). सुभाषितसाहस्री , नई दिल्ली : राष्ट्रिय संस्कृत संस्थान.*

# 11

# काव्येषु नाटकस्य रमणीयता

## (शोधपरकं विश्लेषणम्)

*आशासिंह रावत*

अस्मिन् जगति कवीनां महिमा महीयान्। कवीनां निर्मितिस्तु ब्रह्मणो निर्मितिम् अपि अतिशेते। यथाह काव्यप्रकाशे आचार्यो मम्मटः -

**नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।**

**नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति।।**[1]

ते खलु सौभाग्यशालिनः सन्ति कविपदमाप्नुवन्ति। कथितमप्यस्ति काव्य ये कलाकोविदैः -

**नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा।**

**कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा।।**[2]

कवीनां महिमानमेवं गायन् अग्निपुराणकारः कथयति -

**अपारे काव्यसंसारे कविरेव प्रजापतिः।**

**यथास्मै रोचते विश्वं तथेदं परिवर्तते।।**[3]

इत्थं काव्यप्रणेतारः कवयो जगति भृशं महत्त्वं भजन्ते। एवं तावज्जिज्ञासा जायते किं नाम तत्काव्यम्[4]? वस्तुतः सहृदयहृदयाह्लादकारि लोकोत्तरवर्णना निपुणकवि कर्म काव्यमिति काव्यस्य सामान्यं स्वरूपमुच्यते। काव्यस्य मीमांसा बुधैः बहुधा कृतास्ति। अत्र कानिचित् काव्यलक्षणानि प्रस्तूयन्ते-

**अदोषं गुणवत्काव्यमलंकारैरलङ्कृतम्।**

**रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति।।**[5]

तथा -

**तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि।**[6]

अन्यच्च -

**वाक्यं रसात्मकं काव्यम् ।**[7]

अपि च -

**रमणीयार्थप्रतिपादकः शब्दः काव्यम् ।।**[8]

तत्काव्यन्तु दृश्यश्रव्यभेदेन द्विविधं भवति। तथा चाह विश्वनाथः साहित्यदर्पणे -

**दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम् ।**[9]

तत्र प्राधान्येन श्रवणपदवीं प्राप्य सचेतसां हृदयावर्जकं काव्यं श्रव्यमिति कथ्यते। दर्शकानां सहृदयसामाजिकानां नेत्रानन्दविधायकं सहृदयहृदयाकर्षकं काव्यं दृश्यमित्युच्यते। श्रव्यकाव्यं तु केवलं श्रूयते एव- श्रव्यं श्रोतव्यमात्रं तत्। तदेतच्छ्रव्यकाव्यं महाकाव्य-गद्यकाव्य-गीतिकाव्यादिभेदेन बहुविधम्। दृश्यकाव्ये तु यच्छ्रूयते तस्य दर्शनमपि जायते। श्रवणतो दर्शनं वरम् इति प्रसिद्धम्। यतोहि श्रवणेन खलु न तथा आनन्दोपलब्धिः रसानुभूतिश्च यथा दर्शनेन। रसानुभूतिश्च नाम काव्यस्य परमं प्रयोजनम्। इदं दृश्यं काव्यम् अभिनेयं भवति। अत्र नटादौ रामादीनामारोपो भवति, अत इदं रूपकमप्युच्यते -

**दृश्यं तत्राभिनेयं तद्रूपारोपात्तु रूपकम् ।**[10]

अर्थात् काव्ये उपनिबद्धानां धीरोदात्त-धीरोद्धत-धीरललित-धीरप्रशान्तानां नायकानाम् अवस्थानुकारः चतुर्विधाभिनयनाट्यकौशलेन अभिनेतुर्नटस्य नायकेन तादात्म्यापत्तिरेव नाट्यमिति। अभिनेतुं योग्यमभिनेयमिति व्युत्पत्त्यनुसारेण नटादिभिः अभिनीयमानं नायकादीनां चरितमेव अभिनयमुच्यते। एतदभिनयमेव नटे रामादिनायकानां स्वरूपारोपणात् रूपकमिति अभिधीयते। अत एव धनञ्जयेन अपि कथितम् -

**अवस्थानुकृतिर्नाट्यम्। रूपकं तत्समारोपात् ।**[11]

रूपकाणि खलु दश सन्ति - 1. नाटकम्, 2. प्रकरणम्, 3. भाणः, 4. व्यायोगः, 5. समवकारः, 6. डिमः, 7. ईहामृगः, 8. अङ्कः, 9. वीथी, 10. प्रहसनं चेति। यथोक्तं विश्वनाथेन -

**नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः ।**
**ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ।।**[12]

आचार्यः वामनोऽपि समीक्ष्यैव दशरूपकाणां विषये लिखति -

**सन्दर्भेषु दशरूपकं श्रेयः।**[13]

आचार्यो धनञ्जयो रूपके तत्त्वत्रयम् प्रमुखम् उररीकरोति। तन्मतेन एतत् तत्त्वत्रयमेव तेषां भेदकम् -

**वस्तु नेता रसस्तेषां भेदकः।**[14]

रूपकस्य विभाजनम् एतत् तत्त्वत्रयमेव खलु श्रूयते। एतेषु रूपकेषु नाटकस्य प्राधान्यं वरीवर्ति। अतः सम्प्रति रूपकस्य कृते नाटकस्यैव प्रयोगो दृश्यते। अत्र नाटके रसस्य खलु अप्रतिमं महत्त्वं वर्तते। साहित्यदर्पणे नाटकलक्षणं प्रतिपादयता विश्वनाथेन प्रोक्तम् -

**नाटकं* ख्यातवृत्तं स्यात्पञ्चसन्धिसमन्वितम्।**
**विलासद्धर्यादिगुणवद्युक्तं नानाविभूतिभिः।।**
**सुखदुःखसमुद्भूति - नानारसनिरन्तरम्।**
**पंचादिका दशपरास्तत्राङ्काः परिकीर्तिताः।।**
**प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्।**
**दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः।।**
**एक एव भवेदङ्गी श्रृङ्गारो वीर एव वा।**
**अंगमन्ये रसा सर्वे कार्यो निर्वहणेऽद्भुतः।।**
**चत्वारः पंच वा मुख्याः कार्यव्यापृतपूरुषाः।**
**गोपुच्छाग्रसमाग्रं तु बन्धनं तस्य कीर्तितम्।।**[15]

**नाटकेषु रमणीयता -**

कतिचिद्विद्वांसः कलायाः अन्तः काव्यान्येव न सन्ति अपि तु कलाया अन्तः ललितकलासु दृश्यते इति स्वीकुर्वन्ति। मुख्यरूपेण ललितकलाः पंच स्वीक्रियन्ते-वास्तुकला, मूर्तिकला चित्रकला, संगीतकला, काव्यकला चेति। आसु पंचसु कलासु यस्याः कलायाः निरूपणे न्यूनतमानि साधनानि प्रयुज्यन्ते सैव कला श्रेष्ठतमोच्यते, अतः वास्तुकलाया अपेक्षया मूर्तिकला श्रेष्ठा अस्ति। क्रमशो विवेचने काव्यकलायामेव न्यूनतमसाधनानि उपज्यन्तेऽतः काव्यकलैव श्रेष्ठतमा कला अस्ति। तत्रापि काव्यस्य श्रव्यापेक्षया दृश्यकाव्ये अधिकतरं रमणीयत्वमास्वाद्यते। यतश्च श्रव्यकाव्ये तु रमणीयत्वोपपादकानि तत्त्वानि केवलं श्रवणाभ्यामेव आस्वादकारणि भवन्ति। तथा सहृदयाः श्रव्यकाव्यान्तर्गतानां भावानां

कल्पनाशक्त्या चित्रं हृन्मानसेऽङ्कितं कृत्वा कष्टमनुभवन्ति। येन रमणीयतायाः पूर्णास्वादोऽनुभोक्तुं न पार्यतेऽतः दृश्यकाव्ये कष्टकल्पनया रमणीयतायाः वास्तविकं स्वरूपम् अनायासेन आस्वादयितुं शक्यते। इदमेव कारणमस्ति यत् अलौकिककलाकौशलेन अभिनयनैपुण्येन प्रदर्शितनाटकावलोकनेनैव सर्वोऽपि भावः नायकनायिकादीनां सामाजिकानां चेतःसु साक्षादंकितो भूत्वा सद्यो रसानुभूतिविषयो भवति। श्रव्यकाव्ये तु यद्यदनुभूयते श्रवणसाहाय्येन दृश्ये तु तत्सर्वं सूक्ष्मातिसूक्ष्मप्रयासेनैव सहृदयैरनुभूयतेऽतः श्रव्यापेक्षया दृश्यस्य रमणीयता सुतरां श्रेष्ठतमां पदवीम् अध्यास्ते।

नाट्ये सर्वविधं ज्ञानम्, सर्वविधं शिल्पं, सर्वाः विद्याः, सर्वाः कलाः, सर्वे भोगाः, सर्वाण्यपि च कर्माणि विराजन्ते अत एव नाट्यशास्त्रस्य आविष्कर्त्रा भरतमुनिना अपि नाट्यशास्त्रे प्रत्यपादि तथाहि समीक्ष्यन्ताम्-

**न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।**
**नासौ योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते।।**[16]

अतः संस्कृतनाटकानि अन्यासां भाषाणां नाटकानाम् अपेक्षया सरसवचनरचनया काव्यकलाकौशलशैल्या प्रायशः सुखान्तानि सद्यो रसानुभूतिकराणि अतिप्रसिद्धानि सन्तीति सर्वैरपि सोल्लासं स्वीक्रियन्ते। संस्कृतनाटकानि तु नान्दीपताकाप्रकरी पंचसन्ध्यर्थप्रकृत्यादिभिः निबद्धानि। जीवनस्य सुखैश्वर्यव्यावहारिकराजनीति-शिक्षाणाम् उपदेशः तत्र सामाजिकैः अनुभूयते। कानिचिदुदाहरणानि अत्र प्रस्तूयन्ते यथा अभिज्ञानशाकुन्तले कविकुलगुरुः कालिदासः हस्तिनापुरगमनोद्यतां शकुन्तलां गार्हस्थ्यम् उपदेष्टुं काश्यपमुखेन श्लोकम् इमं संदिश्य भारतीयमहिलानाम् आदर्शस्वरूपम् प्रत्यपादयन् अलिखत् यत् -

**शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने**
**भर्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः।**
**भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी।**
**यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयाः।।**[17]

अपि च-

(क) **अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे।**[18]

(ख) **सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्।।**[19]

इत्यादिभिः उदाहरणैः काश्यपस्य भावानां रमणीयता चेतांसि न समावर्जयति। नागानन्दनाटके दयावीरस्य यच्चित्रम् अवलोक्यते, तदवलोक्य कस्य हृदयं कारुण्येन नाप्लावितं स्यात्, तथा च -

**निराधारं धैर्य्यं कमिव शरणं यातु विनयः ?**

**क्षमः क्षान्तिं वोढुं इह? विरता दानपरता ?**

**हत सत्यं सत्यं व्रजतु कृपया क्वाद्य करुणा ?**

**जगज्जातं शून्यं त्वयि तनय! लोकान्तरगते।।**[20]

नागानन्दनाटकस्य पठनेन कस्य दयावीररसप्रवाहेण हृदयं न द्रवीभवति। हर्षेण एव रत्नावली प्रियदर्शिका च प्रणीते। रत्नावल्यां सागरिकानुरागवर्णनं सहृदयानां हृदयाह्लादकं कस्य चेतसि सुभगां रमणीयतां न पोषयति। तथा च उत्तररामचरितनाम्नि नाटके सीताविरहेण ग्रावा अपि रोदिति वज्रस्यापि हृदयं दलतीत्यधीत्य रमणीयताया सर्वोत्कृष्टं रूपमास्वादयितुं शक्यते। मुद्राराक्षसे राजनीतेर्दुरासदाः उपदेशाः एवमेव स्मृतिपथेन चेतसि प्रविशन्तः कर्तव्यपरायणतायाम् नियोक्तुं वीराणाम् देशभक्तानाम् सावित्री-सीता- आत्रेयी- अहिल्या- लक्ष्मीबाई- इत्यादीनां उदारचित्रानां देवीनाम् अभिनयेन एतद् अनुभूयते यत् रामवत् प्रवर्तितव्यम् न तु रावणादिवत्- इत्युपदेशोऽपि नाटकेभ्यः संगृह्यतेऽतः नाटकेषु काव्यापेक्षया अधिकं रमणीयत्वम् समनुभूयते।

नाटकं वीक्ष्य साधारणजनोऽपि परमानन्दं प्राप्नोति तदा सहृदयानां तु कथैव का? ते तु रूपकरसं पायं पायं परां निर्वृतिं गच्छन्ति। आचार्यो धनंजयो रूपकम् एवम् अभिनन्दति -

**आनन्दनिष्यन्दिषु रूपकेषु व्युत्पत्तिमात्रं फलमल्पबुद्धिः।**

**योऽपीतिहासादिवदाह साधुस्तस्मै नमः स्वादुपराङ्मुखाय।।**[21]

भरतमुनिः स्वकीये नाट्यशास्त्रे नाट्यस्य महत्त्वमेवं निरूपयति -

**दुःखार्तानां श्रमार्तानां शोकार्तानां तपस्विनाम्।**

**विश्रान्तिजननं लोके नाट्यमेतद् भविष्यति।।**

**धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम्।**

**लोकोपदेशजननं नाट्यमेतद् भविष्यति।।**[22]

एतन्नाट्यं खलु उत्तमाधममध्यमानां सर्वेषामपि लोकानां हितं साधयति प्रचुरमानन्दं च आतनोति। यथोक्तं भरतेन -

**उत्तमाधममध्यमानां नराणां कर्मसंश्रयम्।**
**हितोपदेशजननं धृतिक्रीडासुखादिकृत्।।**[23]

अत्र सर्वे रसाः, सर्वे भावाः, सर्वे गुणाः, सर्वाणि शास्त्राणि च राजन्ते। क्वचिद् धर्मो दृश्यते, क्वचित् क्रीडा, क्वचिदर्थः, क्वचिच्छमः, क्वचिच्च कामः -

**क्वचिद् धर्मः क्वचित् क्रीडा क्वचिदर्थः क्वचिच्छमः।**
**क्वचिद् हास्यं क्वचिद् युद्धं क्वचित् कामः क्वचिद् वधः।।**[24]

क्वचिद् वेदविद्या, क्वचिद् ऐतिह्यं, क्वचिद् आख्यानपरिकल्पनम् क्वचिदाचारशिक्षा, क्वचिच्च विनोदविन्यासो वरीवर्ति -

**वेदविद्येतिहासानामाख्यानपरिकल्पनम्।**
**विनोदकरणं लोके नाट्यमेतद् भविष्यति।।**
**श्रुतिस्मृतिसदाचारपरिशेषार्थकल्पनम्**
**विनोदजननं लोके नाट्यमेतद् भविष्यति।।**[25]

अत्र लोकवृत्तम् आश्रित्य नैके भावाः विषयाश्चात्र विराजन्ते -

**नानाभावोपसम्पन्नं नानावस्थान्तरात्मकम्।**
**लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम्।।**[26]

इदं नाट्यं तदा दैवीमाभां श्रयते ययेदं सर्वेषामपि कामान् प्रपूरयति। अस्मान्नाट्याद् यस्य यादृशी अभिरुचिः स तादृशीमेव सामग्रीम् उपलभते। अत्र धर्मोपदेशः विषयोपभोगचर्चा, ज्ञानं, विलासः उत्साहादयश्च सर्वे विषयाः सुशोभन्ते -

**धर्मो धर्मप्रवृत्तानां कामः कामोपसेविनाम्।**
**निग्रहो दुर्विनीतानां मत्तानां दमनक्रिया।।**
**क्लीबानां धाष्ट्र्यजननमुत्साहः शूरमानिनाम्।**
**अबुधानां विबोधश्च वैदुष्यं विदुषामपि।**

अर्थोपजीविनामर्थो धृतिरुद्विग्नचेतसाम्। ईश्वराणां विलासश्च स्थैर्यं दुःखार्तितस्य च। अर्थोपजीविनामर्थो धृतिरुद्विग्नचेतसाम्।।[27]

भारतीयासंस्कृतिः वेदमूला। नाट्यशास्त्रं च वेदमूलम्। अत्र ऋग्वेदात् पाठ्यम्, यजुर्वेदादभिनयः, सामवेदात् संगीतम्, अथर्ववेदाच्च रसाः संगृहीताः सन्तिः। यथाह भरतमुनिः -

**जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च।**
**यजुर्वेदादभिनयान् रसानथर्वणादपि।।**[28]

सहृदयैरेव रत्यादिवासनामाश्रित्य रसास्वादो विधीयते। स्वचेतोगत-वासनाश्रयेणैव प्रेक्षकैरपि रसास्वादनं क्रियते। न स्याच्चेद् वासना प्रेक्षकेषु तर्हि ते जीवन्तोऽपि मृतोपमाः काष्ठपाषाणादिसमानाश्च। उच्यते विश्वनाथेन धर्मदत्तेन च -

**न जायते तदास्वादो विना रत्यादिवासनाम्।**[29]

**सवासनानां सभ्यानां रसस्यास्वादनं भवेत्।**

**निर्वासनास्तु रङ्गान्तःकाष्ठकुड्याश्मसंनिभाः।।**[30]

किं बहुना, काव्यापेक्षया नाटकानामभिनेतुं रंगमंचस्य विविधकलात्मक वस्तुविन्यासादिरलङ्कृतस्य साहाय्येन सम्वादादिषु स्वाभाविकसरस काव्यादीनाम् चित्रणेन दृश्यकाव्ये अतीव रमणीयता प्रत्यपादि। वस्तुतः लोकोऽयं भिन्नरुचिरस्ति नाटकेष्वपि विभिन्नभावानां चित्रणं विविधरमणीयता सम्पादितत्वाद् विभिन्नरुचीनपि जनानभिनयं प्रति समाकृष्य विविधैः भावैः सामाजिकानां मनांसि रमयति। एतन्नाट्यमहत्त्वं संवीक्ष्यैव कवितावनिताविलासः कविकुलगुरुः कालिदासो मालविकाग्निमित्रे लिखति -

**देवानामिदमामनन्ति मुनयः शान्तं क्रतुं चाक्षुषं**

**रूद्रेणेदमुमाकृतव्यतिकरे स्वांगे विभक्तं द्विधा।**

**त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते**

**नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम्।।**[31]

अत एव विभिन्नरुचीनामपि जनानां समावर्जकेषु नाटकेषु काव्यापेक्षया अवश्यं रमणीयत्वं वर्तते नात्र संशयः।

इत्थं काव्यं श्रव्यम् अध्ययनाध्यापनादि-द्वारा तस्य तत्त्वार्थबोधः। श्रवण द्वारा तत्र रसनिष्पत्तिः। नाटकेषु तु अभिनयादिप्रदर्शनाद् वेशभूषाद्यलंकरणात् प्राकृतिकदृश्यसंयोजनात् आंगिकवाचिकाद्यभिनय-संमिश्रणात् नृत्यगीतलास्य विलासात् न केवलं सचेतसामेव रसास्वादो मनस्तोषश्च, अपितु आबालवृद्धं शिक्षितानाम् अशिक्षितानां नराणां नारीणां चानन्दावाप्तिर्मनोरंजनम् च। जीवितमिदं समविषमं सुखःदुःखाद्यनुभूतिप्रधानम्। खिन्नचेतोविनोदाय नाट्यं प्रेष्ठं साधनम्। नाट्यं विषण्णस्य विषादापहम्, खिन्नस्य खेदापनोदनम्, आर्तस्य आर्तिहरम्, आधिप्रपीडितस्य मानसिकोपचारः, उत्पीडितस्य मार्गप्रदर्शकम् यथायथं सर्वेषाम् उपकारि च। श्रान्तचित्तविनोदनस्य नान्यः साधीयान् पन्थाः। कानिचिन्नाटकानि उपदेशप्रदानि, कानिचित् शिक्षाप्रदानि कानिचिद् देशभक्ति- भगवद्भक्ति-

समाजसेवा-परोपकारादिभावसमन्वितानि च प्राप्यन्ते। एवं नाट्कानि सर्वजनहृद्यानि सर्वविधज्ञानप्रदानि सर्वमनस्तोषकाणि सन्ति। सकलेपि भुवने नाट्यानां प्रसिद्धेरेतदेव मूलम्। अत एव एतदेव उत्प्रेक्ष्य एव सत्यमेव उक्तमस्ति -

काव्येषु नाटकं रम्यम्।

**सन्दर्भग्रन्थाः -**


1. *काव्यप्रकाशः, प्रथम उल्लासः*
2. *अग्निपुराणोक्तं काव्यालङ्कारशास्त्रम् 1/3*
3. *अग्निपुराणोक्तं काव्यालङ्कारशास्त्रम् 4/26*
4. *कवेर्भावः कर्म वा काव्यम्, कवि+ष्यञ्*
5. *सरस्वतीकण्ठाभरणम्, 1/2*
6. *काव्यप्रकाशः, प्रथम उल्लासः*
7. *साहित्यदर्पणम्, प्रथमः परिच्छेदः*
8. *रसगङ्गाधरः, प्रथमं आननम्*
9. *साहित्यदर्पणम् 6/1*
10. *साहित्यदर्पणम् 6/1*
11. *दशरूपकम् 1/7*
12. *साहित्यदर्पणम् 6/3*
13. *काव्यालंकार सूत्रवृत्तिः 1/3/30*
14. *दशरूपकम् 1/11*

    **नाटकम्- नटन्ति नृत्यन्ति इति नटाः णट (नृत्तौ) + अच्, नटा एव नाटकाः नाटकाः अभिनेतारः सन्ति यस्मिन् तन्द्नाटकम्, नाटक+अच्*
15. *साहित्यदर्पणम् 6/7-11*
16. *नाट्यशास्त्रम् 1/117*
17. *अभिज्ञानशाकुन्तलम् 4/18*
18. *अभिज्ञानशाकुन्तलम् 4/19*
19. *अभिज्ञानशाकुन्तलम् 4/9*
20. *नागानन्दम् 5/31*
21. *दशरूपकम् 1/6*
22. *नाट्यशास्त्रम्, 1/115-116*

*23. नाट्यशास्त्रम्, 1/113*

*24. नाट्यशास्त्रम्, 1/108*

*25. नाट्यशास्त्रम्, 1/122-23*

*26. नाट्यशास्त्रम्, 1/112*

*27. नाट्यशास्त्रम्, 1/109-111*

*28. नाट्यशास्त्रम्, 1/17*

*29. साहित्यदर्पणम्, 3/9*

*30. साहित्यदर्पणम् तृतीये परिच्छेदे*

*31. मालविकाग्निमित्रम्, 1/4*

# 12

# संस्कृतसाहित्ये काव्यभाषास्वरूप-विवेचनम्

*हेमन्तशर्मा*

भाषा भवति भावाभिव्यक्तेः विचारसंप्रेषणस्य च माध्यमम्। यदा अस्याः भाषायाः प्रयोगं सामान्यजनाः कुर्वन्ति तदेयं सामान्यभाषा कथ्यते अथ च यदा काव्यशास्त्रमर्मज्ञः अस्याः भाषायाः प्रयोगं काव्यादिषु कुर्वन्ति तदेयं काव्यभाषेति कथ्यते। यथोक्तं भाषाविज्ञाने -

"भाषा तद्साधनमस्ति येन माध्यमेन जनाः विचारं कुर्वन्ति विचारान् च अभिव्यञ्जति"[1]

यस्यां भाषायां जनाः परस्परं व्यवहरन्ति स्वकीयविचारान् च अभिव्यञ्जति साकथ्यते सामान्यभाषा। कस्याः अपि भाषायाः प्रधानोद्देश्यो भावाभिव्यक्तिरेव भवति। लोके इयमभिव्यक्तिः द्विधा भवति सामान्यभाषया काव्यभाषया च। सामान्यभाषायां या अभिव्यक्तिः भवति तत्र वक्तुः प्रधानता भवति अत एव सा वक्तृप्रधानसामान्याभिव्यक्तिः कथ्यते किन्तु काव्य-भाषायां या अभिव्यक्तिः सा सामान्यान् भवति अपितु कविप्रतिभाप्रधाना रसादिसमन्विता च अत एव सा कविप्रधानविशेषाभिव्यक्तिः कथ्यते। अनयाधारेणैव काव्यभाषा भिन्ना भवति सामान्यभाषा च भिन्ना। सामान्यभाषा सामान्यमेवार्थं बोधयति किन्तु काव्यभाषा कमपि विशिष्टार्थं बोधयति अतः द्वयोः अभिव्यक्तयोः अर्थेष्वपि भिन्नता भवति। तथोक्तं डॉ. बृजभूषणत्रिपाठिना -

"सामान्यभाषायाः प्रयोगः सामान्यकथनस्य कृते भवति किन्तु काव्यभाषा विशिष्टानुभूतिम् अभिव्यनक्ति"[2]

अनेनाधारेण स्पष्टीक्रियते यद् काव्यभाषायाः मूले सामान्यभाषैव तथा चास्या उत्पत्तिः सामान्यभाषायारे एव जायते। तथापि यथा जलात् तरङ्गः भिन्नः

वर्तते यथा पुष्पात् परागः भिन्नः भवति तथैव काव्यभाषा सामान्यभाषायाः पृथक् भवति। कविंप्रतिभाजन्यं कवेः यत्कृतिः तत्काव्यमिति कथ्यते। काव्यमिदं कवि प्रतिभाजन्यं कविकल्पनासंवलितं विविधभावसमन्वितं च भवति यथोक्तवान् आचार्यभामहः -

"काव्यं तु जायते जातु कस्यचित् प्रतिभावतः"[3]

काव्यमिदं भवति विविधरसभावादिसमन्विता कविकृतिः किन्तु शक्तिं विना उत वा प्रतिभां विना न संभवति उत्कृष्टा काव्यरचना अत एव काव्याय काव्यरचनायै वा कविप्रतिभायाः भवतिमहत्वपूर्णयोगदानम्। कस्यापि कवेः काव्यं काव्यरचना वा तदैव सुन्दरं चमत्कृतं मधुरं सहृदयाह्लादकं च भवति यदा कविः स्वप्रतिभाङ्कुरेण काव्यरचनासु रसादिकाव्यीयतत्त्वानां समुचितं वपनं करोति। कवित्वबीजरूपसंस्कारविशेषा काव्यचमत्कृतिकारिका च कविप्रतिभा एव भवति। अत एव ध्वनिप्रस्थानपरमाचार्यः मम्मटः उक्तवान्काव्य प्रकाशे यद् अनया प्रतिभया शक्त्या वा विना काव्यरचना प्रसृता न भवति। अतः स्वादुकाव्यरचनायै एषा अपरिहार्या अनिवार्या च वर्तते। यथोक्तम् -

"शक्तिः कवित्वबीजरूपः संस्कारविशेषः यां विना काव्यं न प्रसरेत, प्रसृतं वा उपहसनीयं स्यात्"[4]

मम्मटः कथयति यदि कोऽपि कविः प्रतिभां विहाय काव्यरचनायां प्रवृत्तः भवति तदा तस्य तद्रचना प्रतिभा भावात् उपहसनीया अनानन्ददायिका च भवति। यतो हि लोकेस्मिन् प्रतिभैव काव्यरचनां चमत्करोति। पण्डितराजजगन्नाथोऽपि रसगंगाधरे काव्यरचनायाः कृते प्रतिभायाः अपरिहार्यत्वं वर्णयति -

"तस्य च कारणं केवलं कविगता प्रतिभा, सा च काव्यघटनानुकूल शब्दार्थोपस्थितिः।"[5]

काव्यप्रकाशकारः मम्मटाचार्यः उत्तमकाव्यरचनायाः कृते शक्त्या सह निपुणतां अभ्यासं चापि स्वीकरोति। यद्यपि काव्यरचनायाः कृते सः प्रतिभायाः अपरिहारत्वं स्वीकरोति तथापि तेनानुसारं उत्तमकाव्यरचनायै तु शक्ति-निपुणताभ्यासानां त्रयाणां समुदितत्वम् अपेक्षितं भवति। सः काव्यकारण-निरूपणप्रसंगे कथयति काव्यरचनायां न केवलं शक्तिः न केवलं निपुणता न च केवलम् अभ्यासः कारणं भवति अपितु एतेषां त्रयाणां समष्टिः तत्र आवश्यकं भवति न तु व्यष्टिः। अत एवोक्तम् काव्यप्रकाशे -

‘‘त्रयः समुदिताः न तु व्यस्ताः तस्य काव्यस्योद्भवे निर्माणे समुल्लासे च हेतुः न तु हेतवः’’[6]

काव्यसंसारे काव्यरचनासु च शक्तिनिपुणताभ्यासयुक्तः कविरेव प्रजापतित्वेन निरूपितः। तादृशैः गुणसमायुक्तः कविः काव्यजगति स्वरचनासु च यत् किमपि कर्तुम् वाञ्छति सः तत्करोति सः यत्किमपि परिकल्पितुं समर्थः भवति। अत एव कथ्यते -

**अपारे काव्यसंसारे कविरेव प्रजापतिः।**
**यथास्मै रोचते विश्वं तथेदं परिकल्पते।।**[7]

कविः स्वसामर्थ्येन नियतिकृतनियमरहितां सृष्टिं सर्जयितुं शक्यते सः सर्वदानन्दमयीं सृष्टिं रचयितुं शक्तः भवति सः नवरसयुक्तां अनन्यपरतन्त्रां च काव्यसृष्टिं कर्तुं समर्थः भवति। सः विधिसृष्टेः पृथक् सर्वाणि परिवर्तनानि कर्तुं शक्नोति। सः काव्यसृष्टिं परिकल्पयितुं रचयितुं च सर्वथा स्वतन्त्रः भवति। काव्यसृष्टिविषये सत्यमेवोक्तं काव्यप्रकाशे -

**नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।**
**नवरसरुचिरां निर्मितमादधती भारती कवेर्जयति।।**[8]

काव्यं भवति शब्दार्थयोः वाक्यरूपतापन्नं मञ्जुलसाहित्यम्। तादृशशब्दार्थयोः साहित्ये प्राप्नोति भाषायाः स्वरूपम्। भाषामिमां द्विधा विभक्तुं शक्यते काव्यभाषा शास्त्रभाषा चेति भेदाभ्याम्। एतयोः भेदयोः काव्यस्य भाषा शास्त्रभाषायाः भिन्ना भवति। सामान्यतः शास्त्राणां भाषा अर्थावबोधाय भवति किन्तु काव्यस्य भाषा न केवलम् अर्थबोधाय भवति अपितु सा तु रमणीया सुन्दरी रसात्मिका चमत्कृता आह्लादकारिका चापि भवति। तद्यथा कुन्तकाचार्यः ब्रूते काव्यभाषायां प्रयुक्तशब्दार्थयोः विषये -

**शब्दो विवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि।**
**अर्थः सहृदयाह्लादकारिस्वस्पन्दसुन्दरः।।**[9]

काव्यादिषु केवलम् अर्थबोधात्मिकायाः सामान्यभाषायाः प्रयोगः न भवति अपितु काव्यादिषु यस्याः भाषायाः प्रयोगः सा तु चमत्कारोत्पादिका विविधालंकारसमन्विता माधुर्यादियुता आनन्दोत्पादिका रसान्विता च भवति। काव्यादिषु यस्याः भाषायाः प्रयोगः सा तु अभिधालक्षणा-व्यञ्जना-शक्ति त्रयसमन्विता भवति। काव्यभाषायां अभिधार्थस्य केवलम् प्राधान्यं न भवति अपितु

अन्यार्थद्वयोः लक्ष्यार्थस्य व्यङ्ग्यार्थस्य चापि प्राधान्यम् भवति। इयं काव्यभाषा यदा अभिधाशक्तिसमन्विता तदा अभिधार्थं प्रतिपादयति यदा लक्षणाशक्तियुक्ता तदा लक्ष्यार्थं लक्षयति यदा च व्यञ्जना शक्ति-समन्विता भवति तदा व्यङ्ग्यार्थं अभिव्यञ्जयति, एवं प्रकारेण काव्यभाषेयं शक्तित्रयसमायुक्ता भवति। काव्याभाषायां अभिधादि शक्तित्रिभिरेव कस्यचिदस्यापि पदार्थादीनाम् अर्थावबोधो जायते। अस्यां काव्यभाषायाम् अर्थबोधोऽयं क्वचित् अभिधाशक्त्या कुत्रचित् लक्षणाशक्त्या कुत्रचिच्च व्यञ्जनाशक्त्या च भवति। काव्यभाषायामभिधेयार्थस्य वाच्यार्थस्य मुख्यार्थस्य वा बोधः अभिधाशक्त्या भवति। अभिधैषा मुख्यार्थस्य वाच्यार्थस्य वा बोधिका शब्दशक्तिर्भवति यथोक्तम् -

**''स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते''**[10]

काव्यशास्त्रेषु मुख्यार्थरेव वाच्यार्थः अभिधेयार्थऽश्च कथ्यते। काव्यभाषायां अस्य वाच्यार्थस्य महत्त्वपूर्णभूमिका भवति। यतो हि अनया अभिधाशक्त्या एव वाचकशब्दस्य ज्ञानं भवति। असौ वाचकशब्दो काव्ये व्यवहारे च सङ्केतितार्थबोधकः भवति यथोक्तवान् मम्मटाचार्यः -

**''साक्षात्सङ्केतितं योऽर्थमभिधत्ते स वाचकः''**[11]

**आचार्यः विश्वनाथोऽपि उक्तवान् -**

**''तत्र संकेतितार्थस्य बोधनादग्रिमाभिधा''**[12]

वाच्यार्थबोधे संकेतग्रहस्यास्ति प्रमुखभूमिका। अभिधाशक्त्या द्वारा वाच्यार्थबोधोऽयं सङ्केतग्रहमाध्यमेनैव जायते। संकेतग्रहोऽयम्अष्टप्रकारकः निरूपितः-

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।**
**वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः।।**[13]

एषु अष्टप्रकारकेषु संकेतग्रहेष्वपि सर्वप्रमुखं यन्माध्यमं तदस्ति व्यवहारः। यतोहि उत्तममध्यमादिव्यवहारमाध्यमेन शीघ्रमेव शब्दबोधः भवति। अत एव व्यवहारज्ञानमिदं सर्वप्रमुखं माध्यमं स्वीकृतं संकेतग्रहस्य। काव्यभाषायाम् अर्थावबोधायैतेषां सङ्केतग्रहाणां महत्त्वपूर्णयोगदानं भवति। काव्यभाषायामर्थ-बोधः एतैः संकेतग्रहैः कुत्रचित् व्याकरणशास्त्राद् भवति क्वचित् कोशशास्त्रात् भवति कुत्रचिच्चाप्तवाक्यादिभिः अन्यैः माध्यमैःभवति। किन्तु लोकव्यवहारे सङ्केतग्रहस्यास्य प्रयोगः भाषायाः माध्यमेन भवति तस्मादेव कारणात् अन्यस्थ

कस्यापि माध्यमापेक्षया काव्यभाषायाः कृते इदम् सर्वोपयुक्तमाध्यमं वर्तते। वस्तुतः अभिधया एव कस्यचिदस्यापि शब्दस्य मुख्यार्थबोधः भवति, अयं मुख्यार्थरेव काव्ये प्रधानः भवति अतः काव्यभाषावबोधाय अभिधाशक्तेः वर्ततेऽपरिहार्यं स्थानम्।

अस्यां काव्यभाषायाम् अभिधाशक्तिद्वारा वाच्यार्थस्य तु बोधः भवति किन्तु लक्ष्यार्थस्य व्यङ्ग्यार्थस्य च बोधो न भवति। किन्तु काव्ये यथा मुख्यार्थः विराजते तथैव तद्भिन्नौ लक्ष्यार्थव्यङ्ग्यार्थौश्चापि भवतः। काव्यशास्त्रे नियमोऽस्ति यद् एका शब्दशक्तिः एकमेवार्थं बोधयितुं सक्षमा अतः वाच्यार्थात् भिन्नयोः लक्ष्यार्थव्यङ्ग्यार्थयोः चावबोधायापि कापि शक्तिः स्यात्। अत एव काव्येषु काव्य शास्त्रिभिः वाच्यार्थस्य अवबोधाय अभिधा, लक्ष्यार्थस्य बोधाय लक्षणा अथ च व्यङ्ग्यार्थबोधाय व्यञ्जना शब्द शक्तिः स्वीकृता तथोक्तम् आचार्येण -

**वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः।**

**व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्नः शब्दस्य शक्तयः।।**[14]

काव्यभाषायां अर्थबोधप्रक्रियायाम् एतेषां शक्तित्रयाणां महत्त्वपूर्णं योगदानं भवति। काव्येषु अभिधाशक्तिद्वारा यत्रार्थबोधः न भवति अथवा यत्रार्थबोधं कारयितुंअभिधाशक्तिःसक्षमा समर्था वा न भवति तत्र काव्येषु अर्थावबोधाय अन्या काचित् शक्तिः आवश्यकीभवतिशब्दस्य सैव शक्तिः लक्षणेति कथ्यते। यथोक्तम् -

**मुख्यार्थबाधे तद्योगे रुढितोऽथप्रयोजनात्।**

**अन्यार्थो लक्ष्यते यत् सा लक्षणारोपिताक्रिया।।**[15]

काव्यभाषायां लक्षणा द्वारा बोधितौर्थः लक्ष्यार्थत्त्वेन परिज्ञायते। लक्षणाशक्तिद्वारा असौ लक्ष्यार्थबोधो मुख्यार्थबाधात् तद्योगात् रूढितः प्रयोजनात् वा भवति। लक्षणैषा शब्दस्य आरोपितव्यापारत्त्वेन क्रियात्त्वेन वा उपवर्णिता तद्यथोक्तमाचार्येण -

''मुख्येन अमुख्योऽर्थो लक्ष्यते यत् स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा''[16]

'कर्मणि कुशलः' 'गङ्गायां घोषः' इति वर्तते लक्षणायाः प्रसिद्धे उदाहरणे। एतयोः उदाहरणयोः मुख्यार्थेन अमुख्यार्थस्य बोधो भवति। प्रथमोदाहरणे कर्मणि कुशलः इत्यत्र कुशलः कुशान् लाति आदत्ते इति कुशलः। किन्त्वत्र मुख्यार्थबोधो न भूत्वा  कुशल इति पदस्य 'दक्षः' अर्थात् कस्मिन्नपि कार्ये प्रवीणः

निपुणः दक्षः चतुरः वा इति अमुख्यार्थबोधो भवति एवं प्रकारेण द्वितीयोदाहरणेपि 'गङ्गायां घोषः' इत्यत्र गंगायां घोषः (आभीरपल्ली) भवितुं न शक्यते किन्तु गंगातटे घोषः भवितुं शक्यते अतः गङ्गातटे 'घोषः' इति अमुख्यार्थोत्र लक्ष्यते तस्मादत्र लक्षणा शक्तिरस्ति। आचार्यमम्मटानुसारेण लक्षणेयं षड्विधा भवति। यथोक्तम्-

**''लक्षणा तेन षड्विधा''**[17]

काव्यभाषेयं षड्विधलक्षणा समन्वितापि भवति अत एव काव्यभाषायां क्वचित् रूढिलक्षणा दृश्यते कुत्रचित् प्रयोजनवती क्वचित् लक्ष्यार्थस्य बोधः सारोपासाध्यवसानाभ्यां भवति क्वचित् उपादानलक्षणलक्षणाभ्यां च। एवं प्रकारेण स्पष्टं भवति यत् काव्याभाषायां लक्ष्यार्थबोधः लक्षणशक्त्या भवति। अत एव काव्यभाषा न केवलमभिधासमन्विता भवति अपितु लक्षणासमन्विता चापि भवति।

सम्प्रति संस्कृतसाहित्ये काव्यभाषास्वरूपविवेचनदृष्ट्या तृतीयशब्दशक्तेः निरूपणं प्रस्तूयते। इदन्तु स्पष्टमेव यत् काव्यभाषायां मुख्यार्थबोधाय अभिधाशक्तिः प्रयुज्यते लक्ष्यार्थबोधाय लक्षणाशक्तिश्च। परञ्च काव्ये मुख्यार्थलक्ष्यार्थाभ्यां भिन्नः इतोपि अर्थः प्रतीयते। यस्य प्रतीतिः न तु अभिधया भवति न च लक्षणया। अत एव तदर्थपरिज्ञानाय तत्प्रतीतिकारणाय या शब्दशक्तिः समायाति तदर्थं या बोधयति सैवास्ति व्यञ्जना। यथोक्तम् -

**विरतास्वभिधाद्यासु ययाऽर्थो बोध्यते परः।**
**सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च।।**[18]

अपि च

**यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते।**
**फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया।।**[19]

काव्येषु अभिधालक्षणातात्पर्याख्याः शब्दशक्तयः स्वं स्वम् अर्थं बोधयित्वा यदा अपक्षीणाः जायन्ते किन्तु ततोपि कोपि अन्योर्थः प्रतीयते तस्यैवान्यर्थस्य बोधिका शब्दशक्तिः व्यञ्जनेति कथ्यते । इयं व्यञ्जना शक्तिः शब्दार्थयोः प्रकृति प्रत्ययादेश्च व्यञ्जन-ध्वनन-गमन-प्रत्यायनादि-व्यपदेशविषया भवति। काव्यरचनासु अस्याः व्यञ्जनाशक्तेः प्रयोगः सहृदयज्ञाः महाकवयः कुर्वन्ति। अनयैव काव्यभाषायां वक्रोक्तित्त्वं रमणीयत्त्वं चमत्कारत्त्वं च जायते। इयमेव महाकविषु वाणीषु निष्यन्दमाना प्रवाहिता भवति। यथोक्तं ध्वन्यालोके -

**सरस्वती स्वादु तदर्थवस्तु निष्यन्दमाना महतां कवीनाम्।**
**अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम्।।**[20]

शब्दार्थयोः व्यञ्जनैव सा शब्दशक्तिः विद्यते या महाकविषु वाणीषु निष्यन्दमानं व्यङ्ग्यार्थं बोधयित्वा तेषां महाकवीनां विशेषप्रतिभां पोषयति। ध्वन्यर्थप्रतिपादिका व्यङ्ग्यार्थबोधिका च शक्तिःइयमेव। यथोच्यते आनन्दवर्धनेन-

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।।**[21]

व्यञ्जना शक्तिरियं शाब्दी आर्थी भेदाभ्यां द्विविधा विभज्यते। यत्र शब्दात् अर्थप्रतीतिः अर्थबोधो वा जायते तत्र शाब्दी व्यञ्जना भवति। एषा शाब्दीव्यञ्जना द्विविधा भवति अभिधामूलाव्यञ्जना लक्षणामूलाव्यञ्जना च। किन्तु अर्थसम्भवाआर्थीव्यञ्जना भवति। अर्थात् यत्र वक्तृयादिविविधकारणेषु किमपि एकं कारणं यदा शब्दस्य वाच्यार्थलक्ष्यार्थभिन्नयोः अन्य कस्यचिदपि अर्थस्य प्रतिपादनं करोति किमपि अन्यार्थं वा बोधयति तदार्थीव्यञ्जना भवति। काव्यभाषायामेषा विभिन्नप्रकारेणार्थबोधं कारयति। तद्यथा-

**वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः।**
**प्रस्ताव देशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम्।।**
**योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा।**[22]

अनेन विवेचनेन स्पष्ट्यते यत् काव्यभाषा न केवलं अभिधाशक्तियुक्ता भवति न केवलं लक्षणाशक्तियुक्ता भवति अपितु अभिधालक्षणाव्यञ्जनाशक्तित्रयसमन्विता भवति। इयं काव्यभाषा न केवलं अभिधा-लक्षणा-व्यञ्जनाशक्तित्रयसमन्विता भवति अपितु माधुर्यौजप्रासादगुणत्रयसमन्वितापि भवति। काव्यभाषायां माधुर्यगुणः शब्दार्थयोः सौन्दर्यं पोषयति रसिकजनान् चाह्लादयति। अयं माधुर्यगुणः शृङ्गार-करूण-शान्तरससमन्वितं भूत्वा काव्यभाषायाः सुन्दरतां नितरां वर्धयति। यथोक्तम् -

**आह्लादकत्वं माधुर्य शृङ्गारे द्रुतिकारणम्।**
**करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम्।।**[23]

काव्यभाषायामोजगुणः शब्दार्थयोः विकटत्वं गाढत्वं च प्रकटयति। वीरबीभत्स-रौद्र-रस समन्वितः ओजगुणः काव्यभाषायाः सौन्दर्यं निश्चप्रचं आवर्धयति । यथोक्तमोजविषये -

**दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थितिः।**
**बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च।।**[24]

एवं प्रकारेण काव्यभाषा सौन्दर्यावर्धनाय प्रासादगुणोपि अन्यतमां भूमिकां निर्वहति। प्रासादगुणोऽयं कुत्रचित् शुष्केन्धाग्निवत् कुत्रचिच्च स्वच्छजलवत् व्याप्तं भवति ।अस्य प्रभावः स्थितिर्वा सर्वत्र भवति ।तद्यथोक्तम् -
शुष्केन्धाग्निवत् स्वच्छजलवत्सहसैव यः।
**व्याप्नोत्यन्यत् प्रसादोऽसौ सर्वत्र विहितस्थितिः।।**[25]

एवं प्रकारेण काव्यभाषायां गुणानामपि महत्त्वपूर्णं अवदानं वर्तते। अन्ये केचन विद्वांसः काव्यभाषायां शब्दार्थबोधाय तात्पर्यानामाख्यां शक्तिमपि स्वीकुर्वन्ति। तेनानुसारेण काव्यभाषायां वाक्यरचनायां च वाक्यरचनार्थबोधे शब्दार्थबोधे वा तात्पर्यायाः महत्त्वपूर्णस्थानं भवति। अतःकथितम् -

**''तात्पर्यार्थोऽपि केषुचित्''**[26]

इतोपि काव्यभाषायां वाक्यार्थबोधाय वादद्वयस्य अभिहितान्वयवादस्य अन्विताभिधानवादस्य चापि महत्त्वपूर्णं विशिष्टञ्च योगदानं भवति। एतदतिरिक्तं काव्यभाषायां रसालङ्काराणामपि महत्त्वपूर्णस्थानं विद्यते। एवं प्रकारेण स्पष्टं भवति यत् विविध-रसालंकार-गुणादिसमन्विता अभिधालक्षणाव्यञ्जना शब्दशक्तियुता विविधभावाभिभावभूषिता सहृदयाह्लादकारिका च काव्यभाषेयं भवति।

**सन्दर्भग्रन्थाः -**


1. *भाषाविज्ञानम् (डॉ. भोलानाथ तिवारी) - पृष्ठ 1*
2. *भाषाविज्ञानम् (डॉ. भोलानाथतिवारी) - पृष्ठ 20*
3. *काव्यालङ्कारः 1-5*
4. *काव्यप्रकाशः पृ. 16*
5. *रसगङ्गाधरः पृ.27*
6. *काव्यप्रकाशः पृष्ठ 17*
7. *ध्वन्यालोकः पृष्ठ 312*
8. *काव्यप्रकाशः 1.1*
9. *वक्रोक्तिजीवितम् 1.9*

*10. काव्यप्रकाशः 2.8*

*11. काव्यप्रकाशः 2.7*

*12. साहित्यदर्पणम् 2.4*

*13. साहित्यदर्पणम् पृष्ठ, 43*

*14. साहित्यदर्पणम् 2.3*

*15. काव्यप्रकाशः 2.9*

*16. काव्यप्रकाशः पृष्ठ 52*

*17. काव्यप्रकाशः 2.12*

*18. साहित्यदर्पणम् 2.12*

*19. काव्यप्रकाशः 2.1 4/15*

*20. ध्वन्यालोकः 1.6*

*21. ध्वन्यालोकः 1.13*

*22. काव्यप्रकाशः 3.12/22*

*23. काव्यप्रकाशः 8.68/69*

*24. काव्यप्रकाशः 8.69/70*

*25. काव्यप्रकाशः 8.70/71*

*26. काव्यप्रकाशः 2.6*

# 13

# काव्यशास्त्रे वागर्थविमर्शः

*रहसबिहारीद्विवेदी*

कवेर्भावः कर्म वा काव्यम्, शसनात् शंसनाद् वा शास्त्रम् काव्यस्य शास्त्रं काव्यशास्त्रम्। ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती व्याहार उक्तिर्लपितं भाषितं वचनं वचः। इत्येते शब्दा वाक्पर्यायवाचिनः। वाक्शब्द-प्रयोगो-भाषा-ब्रह्म-काव्यदेवीत्यादिरूपेण यथायथं प्राप्यते। ऋग्वेदतोऽद्यावधिपर्यन्तं बहुधा वागादिशब्दानां प्रयोगो दरीदृश्यते।।

**बृहदारण्यकदिशा 'यः कश्चन शब्दो स वागेव'**[1]

एतेन क्वचिच्छब्दोऽपि वाग्बोधकः। महाकविर्भवभूतिरादिकविं वाल्मीकिं वागात्मनि ब्रह्मणि प्रबुद्धं मनुते-

'आत्रेयी- तेन हि पुनः समयेन तं भगवन्तमाविर्भूतं शब्दप्रकाश मृषिमुपसङ्गम्य भगवान् भूतभावनः पद्मयोनिरवोचत्- ऋषे! प्रबुद्धोऽसि वागात्मनि ब्रह्मणि तद्ब्रूहि रामचरितम्। अव्याहतज्योतिरार्षं ते चक्षुः प्रतिभातु। आद्यः कविरसि- इत्युक्त्वा अन्तर्हितः। अथ स भगवान् प्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणस्तादृशं विवर्तमितिहासं रामायणं प्रणिनाय। (उत्तररामचरिते 2.5)

भगवता भर्तृहरिणा वाक्यपदीये प्रथमायां कारिकायां प्रत्यपादि -

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**

**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।** *वाक्यपदीये 1.1*

नूनमेवात्र भवभूतिर्वाक्यपदीयानुगामी। स्वपरिचये स कथयति-

**शब्दब्रह्मविदः कवेः परिणतां प्राज्ञस्य वाणीमिमाम्।**

**मन्येऽत्र 'परिणाम' शब्दप्रयोगो विवर्तार्थ एवाकारि।**

महाकविः कालिदासः प्रायेण परमः शिवभक्तः प्रतीयते। स रघुवंशमहाकाव्ये मङ्गलाचरणे वागर्थयोः पार्वती परमेश्वरयोश्चोपमानोपमेयरूपेण निरूपणं करोति-

**वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ।।**[2]

अत्र कालिदासो वाक्शब्दं प्रयुनक्ति न तु शब्द-शब्दम्।

वस्तुतो वागिति कथने वाचः परापश्यन्तीमध्यमावैखरीति चतुर्विधा वागवबुद्ध्यते। यस्याः स्वरूपं वेदमन्त्रेष्वनेकधा वर्णितं शास्त्रज्ञैर्विचारितञ्च।

**चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।**
**गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचं मनुष्या वदन्ति।।**[3]

**अत्र सायणभाष्यमेवं विद्यते -**

'चत्वारि वाक्परिमितेति - अपरे मातृकां प्रकारान्तरेण प्रतिपादयन्ति - परा, पश्यन्ती, मध्यमा, वैखरीति चत्वारीति। एकैव नादात्मिका वाक् मूलाधारादुदिता सती परेत्युच्यते। नादस्य सूक्ष्मत्वेन दुर्निरूप्यत्वात् सैव हृदयगामिनी पश्यन्तीत्युच्यते। योगिभिर्द्रष्टुमशक्यत्वात् सैव वृद्धिं गता, विवक्षां प्राप्ता मध्यमेत्युच्यते। मध्ये हृदयाख्ये - उदीयमानत्वान्मध्यमा। अथ सैव यदा वाक्ये स्थिता ताल्वादिव्यापारेण बहिर्निर्गच्छति तदा वैखरीत्युच्यते। एवं चत्वारि वाचः परिमितानि। मनीषिणो मनसः स्वामिनः स्वाधीनमनस्का ब्राह्मणा रवाख्यस्य शब्दब्रह्मणोऽधिगन्तारो योगिनः परादि चत्वारि विदुः जानन्ति। तेषु मध्ये त्रीणि परादीनि गुहानिहितानि हृदयान्तर्वर्तित्वात्। तुरीयपदं वैखरीसंज्ञकं मनुष्या वदन्ति। इमामवधारणां संस्कृतकवयः काव्यशास्त्रिणश्च स्वीकुर्वन्ति। वेदो वाचमेव काव्यं मनुते-

**वत्सो वां मधुमधुमद्वचोऽशंसीत् काव्यः कविः।**[3]

मधुमद्वचोऽशंसीत् काव्यः कविरिति मन्त्रांशोवनयोः प्रेरणाह्लाददृष्ट्या प्रयोगस्वरूपाकलसूचकत्वात्काव्य स्वरूपं द्योतयति यतोह्यत्र काव्यः कविरिति शब्दः कण्ठत उपात्तौ। प्रेरणाऽऽह्लादौ काव्यप्रयोजनरूपेण भारतीयाः पाश्चात्याश्च समे स्वीकुर्वन्ति। यः कश्चन शब्दः स वागेवेति बृहदारण्यके[4] प्रतिपादितम्। अतो वामनः 'काव्यशब्दोऽयं गुणाऽलङ्कारसंस्कृतयोः शब्दार्थयो वर्तते इति काव्यस्वरूपं प्रतिपादितवान्। अत्रापि काव्यशब्दोऽयं इत्यत्र शब्दो वागर्थकः। यतो हि अस्मिन्नेव

सूत्रे मध्यमावैखरीबोधकौ सप्तम्यां विभक्तौ शब्दार्थयोरिति वामनेन व्यलेखि। आनन्दवर्धनोऽपि सरस्वतीं वाचमेव काव्याधिकरणं मनुते-

**सरस्वती स्वादु तदर्थवस्तु निष्यन्दमाना महतां कवीनाम्।**
**अलोक सामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम्।।**[5]

काव्यादर्शप्रणेत्रा दण्डिनाऽपि वेदमनुसरता बहुधा काव्याधिकरणं वागेव व्यलेखि। तद्यथा-

**गौर्गौ कामदुधा सम्यक् प्रयुक्ता स्मर्यते बुधैः।**
**दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुर्नैव शंसति।।**

ततश्च

**मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः।**

अत्र दण्डिनः कथने सुस्पष्टरूपेण ऋग्वेदस्य मधुमद्वचोऽशंसीत् काव्यः कविरित्यस्य प्रभावो निभाल्यते। मम्मटोऽपि वागेव काव्याधिकरणं मनुते। प्रथमायां मङ्गलकारिकायां काव्यप्रकाशे -

**नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।**
**नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति।।**[6]

अत्र दधतीत्यनेन काव्यरूपा निर्मितेरधिकरणभूता भारती (वाक्) एवास्ति। काव्यशास्त्रस्यास्य प्राक्तनाचार्यो भामहोऽपि काव्यलक्षणं कुर्वन् वक्ति-वक्राभिधेय्यशब्दोक्तिरिष्टा वाचामलङ्कृतिः।[7]

**शब्दार्थौ सहितौ काव्यम्[8] इति नहि तस्याभिमतं काव्यलक्षणम्।**

एतत्कथनं शब्दालङ्कारार्थालङ्कारयोः कस्यचिदेकस्य महत्त्वं स्वीकुर्वतां विवादशमनार्थमस्ति। पण्डितराजजगन्नाथोऽपि स्वकाव्यस्वरूपनिर्धारणे भामहमेवानुहरति। पण्डितराजस्य लक्षणं विद्यते- रमणीयार्थप्रतिपादकः शब्दः काव्यम्

लेखेऽस्मिन् यथा पूर्वोक्तं यद् यः कश्चन शब्दः स वागेव। अतः पण्डितराजलक्षणे प्रोक्तः शब्दो वाचो वैखरीभेदबोधकः। अत्र मध्यमा वाक् याऽर्थरूपा सा रमणीयार्थप्रतिपादिका स्यात्तदैव सा काव्यं भवति। सा च लोकोत्तराह्लादजनकज्ञानगोचरतारूपा। भामहोऽपि वक्रतायास्तात्पर्यं कण्ठत उपात्तीकरोति-

**निमित्ततो वचो यत्तु लोकातिक्रान्तगोचरम्।**
**मन्यन्तेऽतिशयोक्तिं तामलङ्कारतया तथा।।**
**सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते।**
**यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना।।**[9]

उक्तेन भामहकथनेन वक्रशब्दस्यार्थः- लोकातिक्रान्तगोचरं वचः

पण्डितराजेन स्वयं रमणीयस्यार्थः प्रत्यपादि 'रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता' आचार्येणानन्दवर्धनेन ध्वन्यालोके प्रथमोद्योते षष्ठ्यां कारिकायां व्यलेखि -

**सरस्वती स्वादु तदर्थवस्तु निष्यन्दमाना महतां कवीनाम्।**
**अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम्।।**

मम्मटोऽपि प्रयोजनेन सहाभिधेयं काव्याह्लादकतत्त्वमेवं प्रतिपादयति- शब्दार्थयोर्गुणभावेन रसाङ्गभूतव्यापारप्रवणतया विलक्षणं यत्काव्यं लोकोत्तरवर्णनानिपुणं कविकर्म। यौ शब्दार्थौ गुणीभूतौ अर्थादुपसर्जनीकृतस्वार्थौ भवतस्तयोरुल्लेखः तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि (सर्वत्र सालङ्कारौ क्वचित्तु स्फुटालङ्कारविरहेऽपि न काव्यहानिः) इति रूपेण मम्मटेन प्रत्यपादि। इदमेवाज्ञानवशात्प्रायः मम्मटस्य काव्यलक्षणरूपेणोद्धरन्ति विद्वांसः। मम्मटस्तु काव्याधिकरणं भारतीं (वाचं) मनुते। यस्या वैशिष्ट्यं मङ्गलपद्ये मम्मटेन प्रत्यपादि।

एवं मधुमद्वचोऽशंसीत् काव्यः कविरिति[10]

वेदमतानुसारेण वागेव काव्याधिकरणं सिद्ध्यति। काव्योन्मेषेऽनुभूतौ चतुर्विधा वागेवान्वर्थतां याति।

ऋग्वेदे काव्यवाचो विविधाः स्थितयोऽपि निरूपिताः सन्ति। तद्यथा- हे इन्द्र स्वानं वाचः सुदिनत्वमह्नां धेहि[11]

पावका नः सरस्वती वाजेभिर्वाजिनीवती। यज्ञं वष्टु धियावसुः। चोदयित्री सूनृतानां चेतयन्ती सुमतीनाम्। यज्ञं दधे सरस्वती।।[12]

विचक्षणः पृथुज्रयः तनुते।[13]

तथा च काव्यभारती विषयेयथास्थलं वेदे यथा प्रोक्तं तदेवानुसरन्तः काव्यशास्त्रिणो दृश्यन्ते, द्योतमाना, त्वशीमती (कान्तिमती), चित्र, नवशक्तिः (मौलिकी), मधुमद्वचः (माधुर्यमयं वचः), ऋतस्पृक् (सत्यान्वेषिणी), इषिरा

(सोद्देश्या), अनमीवा (निर्दोषा), द्युमती (ओजस्विनी), एवं बहुधा वाक् स्वरूपं वेदे प्राप्यते।

इयं वेदवाणी जनान् ज्ञानयुक्तान् करोति, देवान् मनुष्याँश्च प्रसादयति, स्वयं तेजस्विनी सती वदतस्तेजस्विनः करोति। वाङ्मूलत एका भगवतोऽस्याः प्राकट्यमभवत् -

**यद्वाग् वदन्त्यविचेतनानि राष्ट्री देवानां निशसाद मन्द्रा।**
**चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः पशवो वदन्ति।।**
**देवीं वाचमजयन्त देवास्तां विश्वरूपाः पशवो वदन्ति।**
**सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टु नैतु।।**[14]

अत एव पण्डितबटुकनाथशर्मणा सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य वाराणसीस्थस्य साहित्यविभागाध्यक्षचरेण वागर्थयोः साहित्यमयी भारती निरूपिता-

**छन्दः पादाभिरामां घनजघनलसत्तर्कविद्याप्रसारां**
**पार्श्वोद्यत्साङ्ख्ययोगां हृदयसरसिजोद्भासितब्रह्मतत्त्वाम्।**
**वक्षोजव्याप्तवेदां पदमयवदनामागमोद्भासिभालां**
**काव्यालङ्कारहासां भजत भगवतीं भारतीं भारतीयाम्।।**

वागर्थयोः सम्पृक्तिः साहित्यं हितेन सह सहितं तस्य भावो वा साहित्यं (सहभावरूपं वा) यथाह कुन्तकः-

**साहित्यमनयोः शोभाशालितां प्रति काप्यसौ।**
**अन्योन्यानतिरिक्तत्वमनोहारिण्यवस्थितिः।।**[15]

श्रीकण्ठदीक्षितः स्वकीये शिवलीलार्णवे महाकाव्ये समग्रे प्रथमे सर्गे कविकाव्यवाग्विषये प्रतिपादयति। अत्र सामान्यव्यवहारे प्रयुक्ता या वाचः काव्यभाषाभिन्नत्वमेवं प्रस्तौति-

**यानेव शब्दान् वयमालपामो यानेव शब्दान् वयमुल्लिखामः।**
**तैरेवविन्यासविशेषमत्यैः सम्मोहयन्ते कवयो जगन्ति।।**
**वक्रोक्तयोर्यत्र विभूषणानि वाक्यार्थबोधः परमप्रकर्षः।**
**अर्थेशु बोध्येष्वभिधैव दोषः सा काचिदन्या सरणिः कवीनाम्।।**
**तान्येव शास्त्राणि त एव शब्दास्त एव चार्था गुरवस्त एव।**
**इयान् विशेषः कवितापथेऽस्मिन् देव्या गिरां दृक् परिवर्त्तभेदः।।**[16]

देव्या गिरां दृक् परिवर्तभेदः इति रूपेण भामहवदयमपि कविः गिरां (अर्थात् परापश्यन्तीमध्यमावैखरीणां) परिवर्तभेद इति लिखति। भामहोऽपि वक्राभिधेयशब्दोक्तिरिष्टावाचामलङ्कृतिरिति लिखति। अत्र वाचामिति पदात्काव्यानामपि सङ्गतिर्भवति। अनेकेषु स्थलेषु भामहः काव्यस्थाने वाचं प्रयुनक्ति।

वस्तुतः काव्योन्मेषेऽनुभूतौ च चतुर्विधा वागनुस्यूता भवति। छान्दोग्योपनिषदि कविनापि वाक्सन्दर्भे यथा प्रतिपादितम्- वागेव ऋक्प्राणः सामोभित्येत्येतदक्षरमुद्गीथः। तद्वा सून मिथुनं यद् वाक् च प्राणश्चार्क च साम च। तदेतन्मित्येतन्मिथुन-मोमित्येतत्तस्मिन्नक्षरे संसृज्यते यदा वै मिथुनौ समागच्छत आपायतो वै तावदन्योन्यस्य कामम्।।[17]

एवं वाक् पुरुषस्य मनोऽधिष्ठात्री प्राणस्तस्य कर्तृत्वप्रतिनिधयः - मनः प्राणश्च परस्परमाह्लादमनुभवन्ति कर्तृत्वं यत्प्राणेषु प्रसृतं तन्मनः स्वस्मिन् विलीनीकृत्योद्गच्छति वाचि च मुखरितं भवति। कविभारत्युद्गमनस्यैवैषा स्थितिः, कदाचिन्मनो बुद्धितोऽर्थं गृह्णीयात्तदा व्यावहारिकस्य जगतो वागुत्पद्येत। काव्यसर्जने मनः प्राणानाकर्षति तदा जगतः कर्तृत्वं तस्मिन् लयं याति। तच्च सामसङ्गीतं भवति, मनसोस्य संस्पर्शा; काव्यभारतीम् ऋचं सृजति। एवं काव्यसर्जने वाङ्निर्मितिरेव भवति। अर्थे जगति वा विद्यमानं वस्तु स्वास्तित्वं विहाय प्राणेषु लयं याति। सहृदयस्तां भारतीं (काव्यं) श्रुत्वा पठित्वा वा तन्मूलरूपस्यापरोक्षानूभूतिं करोति। अपरोक्षानुभूतौ स लोकोत्तराह्लादमनुभवति।

ऋग्वेददिशा कविभारत्यास्त्रिधा गतिर्भवति सा स्रष्टुरात्मनि भवति यां स मनसि स्थापयति, मनसा सुसंस्कृता सती सा कविना ऋतस्य पदे प्रतिष्ठाप्यते-

**पतङ्गो वाचो मनसा बिभर्ति तां गन्धर्वोऽवदद् गर्भेऽन्तः।**
**तां द्योतमानां स्वर्यां मनीषाम् ऋतस्य पदे कवयो नयन्ति।।**[18]

पाणिनीयाशिक्षायामपि तथैव प्रतिपादितम्-
आत्मा बुद्ध्या समेत्यर्थान् मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्।
मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम्।
वस्तुतः कवेरनुव्याहरणं तद्भारत्यैव भवति।

अनुभूतिरपि भारत्यैव भवति तत्र चतुर्विधा वागन्विता भवति। अत एव महाकविना कालिदासेन वागर्थाविव सम्पृक्तौ रघुवंशमङ्गलपद्ये लिखितम्। शब्दार्थाविव न लिखति यतो हि शब्द-शब्देन वैखरीमात्रस्यावबोधो भवति।

अनुभूतिसन्दर्भेऽपिशाकुन्तलीयं पद्यं प्रसिद्धमेव-

**'रम्याणि वीक्ष्य मधुराँश्च निशम्य शब्दान्**
**पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः।**
**तच्चेतसा स्मरति नूनमबोधपूर्वं**
**भावस्थिराणि जननान्तरसौहृदानि।।**

अस्मिन् पद्ये एकतो बुद्धिरन्यतश्च चेतः, अन्तःकरणवृत्तित्वाद् उभौ समानार्थकौशब्दौ प्रतीयेते किन्तु भारतीयायां दार्शनिक्यामवधारणायां चेतो बुद्धेः परतरं तत्तु चैतन्यमतश्चेतसा स्मरणे इत्यत्र सामान्यं स्मरणं नास्ति तदपरोक्षानुभूतिरूपमस्ति। बुद्धितोऽर्थग्रहणे व्यावहारिकस्य जगतो ज्ञानं भवति। लौकिकाह्लादं ज्ञानं वा भवति। वागितिकथने चतुर्धा वागन्विता भवति। अतो वागेव काव्यं मन्वते। भामह-दण्डि-मम्मटजयदेवादय आचार्याः। अत एव मया स्वकीयां नव्यकाव्यतत्त्वमीमांसायां काव्यलक्षणमेवं व्यलेखि -

**लोकोत्तरे हृदाह्लादे लोकोद्बोधे च सङ्गता।**
**प्रज्ञावतः कवेः सद्वाक् काव्यमित्यभिधीयते।।**

**सन्दर्भग्रन्थाः -**


*1. ऋ. 1.53*
*2. रघुवंश 1.1*
*3. ऋ.164.45*
*3 ऋ.5.39.5*
*4. बृहदारण्यक 1.53*
*5. ध्वन्यालोक - 1.6*
*6. काव्यप्रकाशे 1.1*
*7. काव्यालङ्कार 1.36*
*8. काव्यालङ्कार 1.16*
*9. काव्यालङ्कार 2.81-85*
*10. ऋ. 8.8.11*
*11. ऋ. 2.21.6*
*12. ऋ. 1.3.9,10*
*13. ऋ. 1.101.7*
*14. ऋ. 8.100.10,11*
*15. वक्रोक्ति जीवितम् 1.17*
*16. शिवलीलार्णवे 1.13, 19, 33*
*17. छन्दोव्योपनिषद् 1.1.5,6*
*18. ऋ.10.117.2*

# 14

# संस्कृत-काव्यशास्त्रे वक्रोक्ति-विमर्शः

*तरुणकुमारशर्मा*

आचार्यकुन्तकः वक्रोक्तिसिद्धान्तस्य प्रवर्तकोऽस्ति। तेषां मतानुसारेण वक्रोक्तिरेव काव्यस्यात्मा विद्यते। वक्रोक्तिसिद्धान्तस्य उद्भव आचार्यभामहेन प्रारभ्यते। स एव प्रथमः वक्रोक्तिवादी आचार्यः मन्यते। आचार्यभामहेन प्रोक्तं यत् काव्यस्य सौन्दर्याधायकतत्त्वं अलंकारो विद्यते तथा च कस्यापि अलंकारस्य अस्तित्वं वक्रोक्तिं विना न भवितुं शक्यते। सश्चालंकारः समग्रमपि काव्यवैशिष्ट्यम् संग्रहणाति। सर्वत्रापि अतिशयोक्तेः प्राधान्यं निरीक्ष्यते। ध्वनिवादेऽपि अतिशयोक्तिमूलक एव ध्वनिः।

शब्दार्थयोः वक्रतया वाण्यां चमत्कार आगच्छति, चमत्कारपूर्णा वाणी एव काव्यं अस्ति तथा च एतयोः निशादकतत्त्वं वर्तते। शब्दार्थयोः वक्रता, इत्थं वक्रतासमन्वितौ शब्दार्थौ 'काव्यम्' इत्यभिधीयते भामहस्य मते अतिशयोक्तितिरेव समग्रतया वक्रोक्तिः अस्ति। एतया अर्थे रमणीयता आगच्छति एतदर्थं कविभिः प्रयासः कर्त्तव्यः, एतां विना कोऽलंकारः सम्भवः? भामहेनोच्यते-

**सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते।**
**यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना।।**[1]

भामहोऽतिशयोक्तिं वक्रोक्तिऽञ्च पर्यायत्वेन विगणयति। अत्र सैषा अतिशयोक्तिरेव वक्रोक्तिरित्यर्थः, अनयैव अर्थस्य अभिव्यक्तिः भवति अतिशयोक्तिमूलैव वक्रोक्तिः। भामहाभिमतेन वक्रोक्तिः सर्वालंकाररूपा। सर्वेषामलंकाराणां मूलमेतत्। अनयैव अर्थाभिव्यक्तिः। वक्रोक्तिः काव्ये समस्तसौन्दर्यधायिका। एवं भामहमतेन वक्रोक्तिः काव्यस्यात्मा।

भामहः काव्यस्य लक्षणं निरूपयन्नाह - शब्दार्थौ सहितौ काव्यम् ।[2]

अत्र शब्दार्थौ शब्दार्थयोरेव वाचकौ न अपितु चारुत्वहेतूनां अपि प्रत्यायकौ स्तः शब्दार्थयोः सम्बन्धस्य सर्वदा विद्यमानत्वात् तयोः साहित्यस्य कदापि अभावो न भवति। अतः साहित्यस्य भावः अत्र विशिष्टं साहित्यमेव अभिप्रेतमस्ति। इयं च विशिष्टा वक्रौक्तिः। भामहेनोक्तम् -

**वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः।**[3]

आचार्यकुन्तकोऽपि वक्रोक्तिस्वरूपं वक्रोक्तिजीविते प्रतिपादयन्नाह-

**उभावेतावलङ्कार्यौ तयोः पुनरलंकृतिः।**
**वक्रोक्तिरेव वैदग्ध्यभंगीभणितिरुच्यते।।**[4]

वक्रोक्तिर्वचोभङ्गिमा एवास्ति। एवं वचोभंगि एव उक्तौ शोभां आदधाति। उक्तौ चमत्कृतेश्चारुतायाश्च सम्पादनं वक्रोक्त्यैव संभाव्यते। अतः वक्रोक्तिः काव्यजीवितम्। वक्रोक्तिहीनं काव्यं निर्जीवमेवास्ति। उक्तवैचित्र्यं चमत्कृतिर्वा वक्रोक्तिरस्ति। सैषा विशेषता काव्यं प्रतिभामूलैव। यत्र कस्मिंश्चित् वर्णनविषये तस्य कस्यचिद् धर्मस्य गुणस्य वाऽतिशयेनोक्तः वैचित्र्येण विच्छित्या वा प्रतिपाद्यते तत्र वक्रोक्तिः अस्ति। काव्यलक्षणेऽपि वक्रोक्तेरनिर्वायत्वं कुन्तकेन वक्रोक्तिजीविते प्रतिपादितम् -

**शब्दार्थौ सहितौ वक्रकवि व्यापारशालिनी।**
**बन्धे व्यवस्थितौ काव्यं तद् विदाह्लादकारिणी।।**[5]

वक्रोक्तेः स्थापनायां विषये आचार्यानन्दवर्धनस्यापि महत्त्वपूर्णं योगदानमास्ति। आचार्यानन्दवर्धनः सर्वथा सहमतोऽस्ति। तन्मतानुसारम् - काव्यस्यात्मा ध्वनिः।[6]

कुन्तको भामहेन दण्डिना च प्रेरणां अवाप्य स्वभावोक्तावपि वक्रोक्तेर्दर्शनं कुरुते। वक्रोक्तेः क्षेत्रं च यावदवव्यर्थविषयं विस्तारयति। कुन्तकानुसारं काव्यशोभाकाराः सर्वेऽपि धर्मवक्रोक्तिजन्या एवस्ति। एवं स्फुटं ज्ञायते यत् कुन्तको वक्रोक्तेर्महत्त्वं प्रभावं चमत्कृतिश्च अलंकारवादिभ्यः एवागृहूणात्। आनन्दवर्धनोऽपि वक्रोक्तिं समर्थयन् इव प्रतिभाति तन्मतानुसारं 'काव्यात्मा ध्वनिः।' काव्यस्य कलाभाव- पक्षयोर्ध्वनिना वक्रता प्रतिपाद्यते। अतिश्योक्तिः काव्यस्य सौन्दर्यं विशदयति। सर्वेप्यलंकाराः अतिशयोक्तौ वक्रौक्तौ वा

समाश्रिताः। कविप्रतिभाजन्या अतिशयोक्तिः अलङ्कारेष्वधिकं सौन्दर्यं वर्धयति। अतिशयोक्त्या वक्रोक्त्या वा हीना अलंकारा अलंकारमात्रमेव। आनन्दवर्धनस्योक्तिः भामह-दण्डिनोर्वक्रोक्त्या अभिन्ना अस्ति अतएव ध्वन्यालोके तेनोच्यते - 'अतिश्योक्तिगर्भता सर्वालंकारेषु शक्यक्रिया। क्रतैव च सा महाकविभिः कामपि काव्यच्छविं पुष्यति। तत्राति शयोक्तिर्यं अलटारं अधितिष्ठति कवि प्रतिभावशात् तस्य चारुत्वात्तिाययोगोऽन्यस्य तु अलटारमौत्र्वेति। सैव सर्वालटाररूपा।''

अतिशयोक्तिहीनां वक्रोक्तिहीनं वा काव्यं अवरकाव्यत्वेन गण्यते। एतस्मात् कारणात् अतिशयोक्तिः सर्वालङ्कारमूला मन्यते। आनन्दवर्धनाचार्यमतेन अतिशयोक्तेः अलटारान्तरैः साटयं वाच्यत्वेन व्यग्यत्वेन च भवति। वाच्यरूपेण सा सर्वेषां अलंकाराणां जननी अस्ति। व्यंग्यरूपेण च संयुक्ता सा ध्वनिरूपेण गुणीभूतव्यंग्यरूपेण च विपरिणमते। काव्यस्य कला-भाव-पक्षयोर्ध्वनिनावक्रता सम्पाद्यते। अतिशयोक्तिः काव्यस्य मनोहरत्वं वर्धयति। सर्वे अलंकाराः अतिशयोक्तौ आश्रिताः। आचार्यानन्दवर्धनेन ध्वन्यालोके यथोक्तम् -

तस्याश्चालंकारान्तरसंकीर्णत्वं कदाचित् वाच्यत्वेन कदाचित् व्यंग्यत्वेन। अतिशयोक्तिस्तु सर्वालंकारविषयोऽपि संभवति।[7] इति वदता आनन्दवर्धनेन वक्रोक्तेरपि सर्वालंकारविशयत्वं उपपाद्यते।

कुन्तकस्यमते चातुर्यपूर्णभग्मिया कृतं कथनमस्ति 'वक्रोक्तिः'। कुन्तकाचार्यः स्वविरचिते वक्रोक्तिजीविते ग्रन्थे कविव्यापाररूपकाव्यस्य वक्रतायाः व्याख्यानं कुर्वन् सर्वप्रथमः वक्रतायाः षड्भेदान् निरूपितवान्। प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाभिधा। कीदृशोवैदग्ध्यभंगीभणिति? वैदग्ध्यं विदग्धभावं कविकर्मकौशलं तस्य भंगे विच्छित्ति तया भणितिः वैचित्रैराभिधा वक्रोक्तिरित्युच्यते इति कुन्तकाचार्येण कथितम्। आचार्य कुन्तकः वक्रोक्तेः भेदप्रभेदानां विस्तृतं वैज्ञानिकश्च वर्णनं कृतवान्। कुन्तकेन प्रतिपादितं यत् काव्यानां सर्वेषां तत्त्वानां सन्निवेषः वक्रोक्तेरन्तर्गतं जायते। वक्रोक्तेः षड्विधविभाजनं कुन्तकेन कृतं, ते सन्ति वर्णविन्यासवक्रता, पदपूर्वार्द्धवक्रता, प्रत्ययाश्रितवक्रता, वाक्यवक्रता, प्रकरणवक्रता, प्रबन्धवक्रताश्च।

**प्रथमा वर्णविन्यासवक्रता -**

अस्मिन्नन्तर्गते व्यञ्जनवर्णानां सौन्दर्यस्य प्रकाराणां विवेचनमस्ति। अनुप्रासयमकालंकाराणां वृत्तित्रियाणां रीतिनाञ्च अन्तर्भावः वर्णविन्यासवक्रतामेव भवति। वर्णविन्यासवक्रता विषये उक्तं -

**वर्णविन्यासवक्रत्वं पदपूर्वार्द्धवक्रता।**

**वक्रतायाः परोऽप्यस्ति प्रकारः प्रत्ययाश्रयः।।**[8]

वर्णानां विन्यासो वर्णविन्यासः अक्षराणां विशिष्टन्यसनं तस्य वक्रत्वं वक्रभावः प्रसिद्धप्रस्थानव्यतिरेकिणा वैचित्र्येणोपनिवद्धः सन्निविशिष्टविहितातद्विदा- ह्लादकारी शब्दोभातिशयः। यथा-

**प्रथममरुणच्छायस्तावत्ततः कनकप्रभ-**

**स्तदनु विरहोत्ताम्यत्तन्वी कपोलतलद्युतिः।**

**प्रसरति ततो ध्वान्तक्षोदभमः क्षणदामुखे**

**सरसबिसिनिकन्दच्छेदच्छविर्मृगलाञ्छनः।।**[9]

**द्वितीया पदपूर्वार्द्धवक्रता -**

शब्दस्य रचना प्रातिपादिकेन प्रत्ययस्य संयोगो भवति। अस्या नवसंख्यकाः भेदा सन्ति। यथा-रुढिवैचिञ्यवक्रता, पर्यायवक्रता, उपचारवक्रता, विशेषणवक्रता, संवृत्तिवक्रता, वृत्तिवक्रता, भाववैचित्र्यवक्रता, लिङ्गवैचित्र्यवक्रता क्रियावैचित्र्यवक्रता चेति। पदपूर्वार्द्धवक्रतायाश्चान्तर्गते आचार्यकुन्तकः ध्वनिवादिनां अर्थान्तरसंक्रमितवाच्यध्वनेः, उपचारवक्रतायाश्चान्तर्गते अत्यन्ततिरस्कृतवाच्यध्वनेः समावेशः कृतवान्। पदस्य सुबन्तस्य तिङन्तस्य वा यत्पूर्वार्द्धप्रातिपदिकलक्षणं धातुलक्षणं वा तस्य वक्रता वक्रभावो विन्यास वैचित्र्यम्। यथा-

**तृतीया प्रत्ययाश्रितवक्रता -**

पदस्य उत्तरार्द्धस्थितानां सुप्तिङादि प्रत्ययानां विन्याससौन्दर्यस्य अस्यां अन्तर्भावो जायते। अस्याः षड्भेदाः सन्ति-कालवैचित्र्यवक्रता, कारकवक्रता, वचनवक्रता, पुरुषवक्रता, उपसर्गवक्रता प्रत्ययवक्रता चेति। प्रत्ययः सुप् तिङ् च यस्याश्रयस्तस्य संख्याकारकपुरुषादिवैचित्र्यविहितः यस्मिन् वचनवैचित्र्यं काव्यवन्धशोभायैर्निबध्यते सा प्रत्ययाश्रितवक्रता।[11] यथा- मैथिली तस्य दारा।[12]

**चतुर्थ वाक्यवक्रता-**

वाक्यविन्यासस्य सौन्दर्यस्य नाम वाक्यवक्रतास्ति। अस्यां वक्रतायां अलंकारः आगच्छति। 'वाक्यस्य वक्रभावोऽन्यो विद्यते यः सहस्रधा। यत्रालंकारवर्णोऽसौ सर्वोऽसौ सर्वोऽप्यन्तर्भविश्यति।'[13]

**पञ्चमा प्रकरणवक्रता -**

प्रबन्धोऽस्यैकदेशं प्रकरणमुच्यते। वक्रभावः विन्यासवैचित्र्यं प्रबन्धैकदशेभूते प्रकरणे यादृशोऽस्ति, प्रबन्धे वा नाटकादौ सोऽप्युच्यते। सः सहजाहार्यसौकुमार्यमनोहरः। प्रतिपादितं यथा-

**वक्रभावः प्रकरणे प्रबन्धे वास्ति यादृशः।**
**उच्यते सहजाहार्यः सौकुमार्यमनोहरः।।**[14]

**षष्ठः प्रबन्धवक्रता -**

सम्पूर्णप्रबन्धदृष्ट्या विन्यासरसौन्दर्यं इति नाम्ना अभिधीयते प्रबन्धवक्रतायाः षोढा भेदाः सन्ति। यथा- मूलरसपरिवर्तनवक्रता, समापनवक्रता, कथाविच्छेदवक्रता आनुङ्गिकवक्रता, नामकरणवक्रता तुल्यवक्रता चेति। प्रबन्धेर्वक्रभावः प्रबन्धवक्रतेति। पूर्वोक्तविभाजनेन ज्ञायते यत् वक्रोक्तेः विस्तारो वर्णादारभ्य प्रबन्धं यावत् वर्तते। एतदन्तर्गतमेव भाषा, प्रकृतिवर्णनं, चरित्र-चित्रणं, कथासंयोजनं, ऐतिहासिकतथ्यसंकलनं, वस्तुवर्णनं, अलंकारविधानं, रसप्रयोगः, काव्यसंदेशादिकं तथा सूत्ररूपेणोपलभ्यते येन परिवर्तिन्याः साहित्यिकपरीक्षायाः सरणिः प्रास्ता भवति। प्रतिपादितम् यथा -

**तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते।**
**रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि।।**[15]

वक्रोक्तेः विभिन्नेषु भेदेषु ध्वनेः भेदानां समावेशः जायते ध्वनेः अपेक्षा वक्रोक्त्याः क्षेत्रं व्यापकं वर्तते। क्रियावैचित्र्यवक्रतायां कुन्तको ध्वन्यालोकस्य मग्लाचरणं उपस्थापयति। यथा-

**स्वेच्छाकेसरिणः स्वच्छस्वच्छायायासितेन्दवः।**
**त्रयन्तां वो मधुरिपोः प्रपन्नार्तिच्छदो नखाः।।**[16]

संक्षिप्तरूपेण कथ्यते यत् कुन्तकाचार्यमते वक्रोक्तिः काव्यस्यात्मा। वैदग्धभंगीभणितिरुपवक्रोक्तिः रस-ध्वनि-औचित्य-तत्त्वत्रयं-आत्मसात्करोति। वक्रोक्तिं विना काव्ये काव्यत्त्वं न तिष्ठति। वक्रोक्तिसिद्धान्तस्य महत्त्वस्य कारणं वर्त्तते यत् सर्वेषामपि काव्यमूलतत्त्वानां रसालंकारध्वनिरीत्यादीनां समावेशो भवति। कुन्तकाचार्यः अलौकिकचमत्कारजनकाह्लाददायिन्याः विचित्रतायाः सिद्धये 'वक्रोक्तिजीवितम्' इत्यस्य ग्रन्थस्य रचनां कृतवान्। एशः ग्रन्थः वक्रोक्तिसिद्धान्तं पल्लवितं पुष्पितञ्च करोति। उपर्युक्त विवेचनेन स्पष्टं भवति यत् 'काव्यं हि वक्रोक्तिप्रधानम्।'

**सन्दर्भग्रन्थाः -**


1. *काव्यालंकारः 63*
2. *काव्यालंकारः 1/16*
3. *काव्यालंकारः 19*
4. *वक्रोक्तिजीवितम् 51*
5. *वक्रोक्तिजीवितम् 15*
6. *ध्वन्यालोकः 8*
7. *ध्वन्यालोकः 3/37*
8. *वक्रोक्तिजीवितम् 1/63*
9. *वक्रोक्तिजीवितम् 1/41*
10. *वक्रोक्तिजीवितम् 1/42*
11. *वक्रोक्तिजीवितम् 1/86*
12. *वक्रोक्तिजीवितम् 1/63*
13. *वक्रोक्तिजीवितम् 1/91*
14. *वक्रोक्तिजीवितम् 1/21*
15. *वक्रोक्तिजीवितम् 1/195*
16. *ध्वन्यालोकः 1*

# 15

## शब्दार्थयोः सम्बन्धविचारः

*सूरेरामतिरुमलरेड्डिः*

**पादाङ्गं सन्धिपर्वाणं स्वरव्यञ्जनभूषणम् ।**
**यमाहुरक्षरं दिव्यं तस्मै वागात्मने नमः ।।**[1]

अनवरतस्वाध्यायाध्यापनध्यानधारणादिशुचिक्रियासमासादितसारस्वत-कलाविलासेषु स्फुरदुल्लासेषु दिग्देशकालाद्यपरिच्छिन्न संस्कारसमभ्युदीरितप्रतिभा समानभास्वन्मूर्तिषु प्रफुल्लमनश्चन्द्रकान्तसमाविर्भावितभारतीभासुर चैतन्य दीप्तिषु सदाचाराप्तकीर्तिषु कृतशिष्यशर्मसु भावितात्मसु तत्रभवत्सु विपश्चित्सुपर्वसु पूर्वजेषु गुरुवरेण्येषु मदीयमिमं विनम्रभावनापरिणद्ध- प्रणामाञ्जलिं विनिवेद्य प्रकृतार्थसंविदा सहात्मानमनुसन्दधीय ।

लौकिको मानसः सर्वोऽप्ययं व्यवहारः शब्दतत्त्वमुपजीव्यैव प्रवर्तत इत्ययं विश्वजनीनोऽनुभवः । तदिदं शब्दाख्यं ज्योतिः त्रैलोक्यमुद्योतयति । यदीदं शाब्दिकं ज्योतिर्नाभविष्यत्, तदा सकलमपि जगत्क्रियाजातम् अन्धे तमसि विलयमाप्स्यत् । तादृश महोपद्रवशश्वन्निवृत्तये परमकारुणिकः परमेश्वरो निजौजसा सर्गादौ सर्वज्ञानमयं वैदिकं ज्योतिराकाश्य अस्मानुज्जहार ।

वस्तुतो लोके कांश्चन शब्दान् आकर्ण्य जनोऽर्थसम्प्रत्ययं लभते । तत्रापि न सर्वैः शब्दैः अर्थप्रतीतिर्जायते । जायतेऽर्थप्रतीतिः सार्थकैरेव शब्दैः । निरर्थकैस्तु द्योतकत्वमन्तरा न तादृशः कश्चित् प्रतीत्युपगमः। ये चैव शब्दा अर्थप्रतीतिं जनयन्ति, तेऽपि न सर्वार्थप्रत्याय्यकाः, अपितु नियतार्थप्रत्याय्यकाः । एवं शब्दानां नियतार्थप्रत्याय्यकत्वे बीजमुपन्यस्यति तत्रभवान् आचार्यो भर्तृहरिर्यथा -

**आकारैश्च व्यवच्छेदात् सार्वार्थ्यमवरुध्यते ।**
**यथैव चक्षुरादीनां सामर्थ्यं नाडिकादिभिः ।।**[2]

सर्वेऽपि शब्दा द्रव्यवाचिन एव। तच्च द्रव्यं सर्वभावोपगतं ब्रह्मैव। अतः सर्वेषामपि पदानां घटपटाद्यवच्छिन्नब्रह्मद्रव्यबोधकत्वरूपं वा सर्वार्थाभिधायित्वरूपं वा साङ्कर्यं सम्भवेदिति शङ्कां वारयितुं प्रसङ्गोऽयम् उद्धृतः। ब्रह्मविवर्तभूतै-र्घटपटाद्याकारैः शब्दो नियम्यते। तथा नियमनात् घटाकारावच्छिन्नब्रह्मणः बोधः घटशब्देनैव जायते, न पटशब्देन। एवं पटाकारावच्छिन्नब्रह्मबोधः पटशब्देनैव, न घटशब्देन। एवं सर्वेषामपि शब्दानां रूपविशिष्टमेव द्रव्यं वाच्यमित्यतः सर्वार्थाभिधायित्वरूपं साङ्कर्यमत्र न घटते । विषयमिमं दृष्टान्तमुखेन स्पष्टयति भर्तृहरिराचार्यः। यथा –

चक्षुरादीनां सम्मुखावस्थित सर्ववस्तुदर्शनसामर्थ्यं नाडिकादिभिर्नियम्यते। तथा नियमनात् नाडिकारन्ध्रमार्गोपहितचक्षुरादिभिः तदवकाशावस्थितवस्तु जातमेव द्रष्टुं शक्यम्, न तु तद्बाह्यम्। एवमेव यदाकारावच्छिन्नं द्रव्यं तेनैव शब्देन बोध्यम्, न तु तदन्येन।

प्रसङ्गेनेयता नियत एव शब्दः नियतमर्थं प्रत्याययतीति ज्ञायते। एवमनयोः प्रतीतिनियत्या कश्चिन्नियतः सम्बन्धोऽप्यवश्यं भावीति प्रतिज्ञायते तत्रभवता भर्तृहरिणा। यथा –

**नित्याः शब्दार्थ सम्बन्धास्तत्राम्नाता महर्षिभिः।**
**सूत्राणामनुतन्त्राणां भाष्याणां च प्रणेतृभिः।।**[3]

तत्र व्याकरणशास्त्रे सूत्राणां वार्तिकाणां भाष्याणां च चूर्णिकादीनां प्रणेतृभिः शब्दतत्त्वदर्शिभिः पाणिन्यादिमहर्षिभिः शब्दार्थसम्बन्धाः नित्या इति सम्यगभ्यासेन परिज्ञाताः।

शब्दार्थसम्बन्धनित्यरूपपदचतुष्टयस्य व्युत्पत्तिरपि क्रमेण वेत्तव्या।

तत्रार्थप्रतीतिजनिहेतुत्वे सति प्रकृतिप्रत्ययादिवर्णसमुदायावच्छिन्न-कलेवरत्वं शब्दत्वम्।

शक्तिसहचरितपदजन्यबोधविषयत्वम् अर्थत्वम्।

सम्बन्धिभिन्नत्वे सति तन्निष्ठविशिष्टबुद्धिनियामकत्वं सम्बन्धत्वम्।

ध्रुवं कूटस्थमविचाल्यनपायोपजनविकार्यनुत्पत्यवृद्ध्यव्ययियोगि यत्तन्नित्यम्।[4]

नित्यः शब्दः नित्योऽर्थ इत्याकृतिनिर्देशः। तदुक्तं भाष्ये– आकृति-नित्यत्वान्नित्यः शब्द इति। यतो घटाकारविशिष्टः शब्दः घटाकारमर्थमेवाभिधत्ते, नान्यत्। एवमनयोर्नित्यत्वे तन्निष्ठसम्बन्धोऽपि स्वरूपेणैव नित्यः स्यात्। यदि कदाचिदमीषामनित्यत्वे लोकव्यवहारे शब्दार्थ सम्बन्धानाम् अव्यवस्थया तन्निरूपकं

व्याकरणशास्त्रमप्यवस्थं स्यात्। तदा साधूनामसाधूनां च शब्दानामभेदबुद्ध्या सर्वमपि शाब्दिकं जगत्तन्त्रमव्यवस्थितिमुपेयात्। ईशविपदपनोदनार्थमेव पाणिनिर्षिमतमनुधावन् कात्यायनमुनिः निजवार्तिकग्रन्थे आदिममिदं वार्तिकमुवाच। यथा –

**सिद्धे शब्दार्थसम्बन्धे।**[5]

वार्तिकस्यास्य व्याख्यानं विदधानः भाष्यकारः पतञ्जलिः युक्तिचतुष्टयेन शब्दार्थसम्बन्धानां नित्यत्वमुपपादयति। तत्र सिद्धशब्दः कूटस्थेष्वविचालिषु भावेषु, कार्येषु च प्रयुज्यते। यथा सिद्धा द्यौः, सिद्धा पृथिवी, सिद्ध ओदनः, सिद्धा यवगूरिति। तदा सिद्धशब्दः कथं नित्यार्थकः स्यादिति समुत्थिते शिष्याणाम् अनुयोगे समाधत्ते महर्षिर्यथा –

1. सङ्ग्रहे तावत्कार्यप्रतिद्वन्द्विभावान् मन्यामहे नित्यपर्यायवाचिनो ग्रहणमिति। इहापि तदेव।
2. अथवा सन्त्येकपदान्यप्यवधारणानि। तद्यथा अप्भक्षो वायुभक्ष इति – अप एव भक्षयति, वायुमेव भक्षयतीति गम्यते। एवमिहापि सिद्ध एव, न साध्य इति।
3. अथवा पूर्वपदलोपोऽत्र द्रष्टव्यः – अत्यन्तसिद्धः = सिद्ध इति । तद्यथा – देवदत्तो दत्तः, सत्यभामा भामेति।
4. अथवा व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमितिषनित्य-पर्यायवाचिनो ग्रहणमिति व्याख्यास्यामः।

शब्दार्थसम्बन्धनित्यत्वे युक्तिचतुष्टयेन साकं कञ्चित्समुदाचारमपि दर्शयति । यथा –

**मङ्गलार्थम्।**

माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं सिद्धशब्दमादितः प्रयुङ्क्ते। "मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्ति, आयुष्मत्पुरुषाणि चाध्येतारश्च सिद्धार्था यथा स्युरिति।" तदुक्तं विषयेऽस्मिन् पूर्वमीमांसायां जैमिन्याचार्येण यथा - "औत्पत्तिकः शब्देनार्थस्य सम्बन्धः" इति। औत्पत्तिकस्तु नित्यपर्यायवाची शब्दः, द्वयोरुत्पत्तितस्तस्य साहचर्यात्।

साम्प्रतं शब्दार्थसम्बन्धसद्भावे बीजमाख्याति सम्बन्धसमुद्देशे भर्तृहरिर्यथा –

**अस्यायं वाचको वाच्य इति षष्ठ्या प्रतीयते।**
**योगः शब्दार्थयोस्तत्त्वमप्यतो व्यपदिश्यते।।**[6]

अस्यार्थस्यायं वाचकः शब्दः, अस्य शब्दस्यायं वाच्योऽर्थ इति शब्दार्थयोरनादिः सहजः पुरुषसमयनिरपेक्षः सम्बन्धः अन्यथानुपपत्तिरूपया षष्ठीविभक्त्या निश्चियते। यतः षष्ठीविभक्तेः सम्बन्धबोधनित्यत्वात् तन्निरूपितः शब्दार्थसम्बन्धोऽपि नित्यः। एवं नित्योऽयं शब्दार्थयोः सम्बन्धः वाच्यवाचकभावलक्षण इतरेतराध्यासिकतादात्म्यरूप इत्यवसीयते। यतः शब्दार्थयोस्तत्त्वं गौरयमर्थ इत्यभेदेनैव व्यवह्रियते। यथा लोकेऽपि ''पदं श्रुतमथार्थं श्रुणु'' इत्यत्र श्रवण प्रत्यक्ष विषयक शब्द धर्मः अर्थगतत्वेन सन्निवेश्यते। तथैव ''शब्दः श्रुतः किमवबुद्धः?'' इत्यत्र बुद्धिप्रत्यक्षविषयार्थधर्मोऽपि शब्दगतत्वेन सङ्गम्यते। अतः शब्दार्थयोः स्वरूपम् अभिन्नत्वेनैव सिद्धम्।

तथा परस्परम् अभिन्नस्य शब्दार्थतत्त्वस्य निसर्गसिद्धं सम्बन्धमुपपादयितुं प्रकरणमारभते भर्तृहरिर्यथा –

**इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।**
**अनादिरर्थैश्शब्दानां सम्बन्धो योग्यता तथा।।**[7]

यथा चक्षुरादीनाम् इन्द्रियाणां स्वविषयेषु रूपादिषु अनादिसिद्धा पुरुष-प्रयत्ननिरपेक्षायोग्यतैव सम्बन्धः, तथैव घटाद्यर्थैः शब्दानामप्यनादिसिद्धा पुरुष-प्रयत्ननिरपेक्षा योग्यतैव सम्बन्धः। यथा प्रयत्नशतेनापि रूपे श्रवणेन्द्रियप्रवृत्तिर्न सम्भवति, तथैव घटाद्यर्थेषु पटादिशब्दानामपि वाचकत्वं न सम्भवति। तदुक्तं भाष्यकारेणास्मिन् प्रसङ्गे ''यो हि गामश्व इति ब्रूयान्न जातुचित् सम्प्रत्ययः स्यादिति'' गोपदार्थमुपलक्ष्य कश्चिदश्व इति व्याहरति चेन्न कदापि गवार्थप्रतीतिं लभेत। गवार्थप्रतीतिस्तु गोपदनिष्ठवाच्य वृत्ति मात्र गम्येत्यतोऽत्र अश्व शब्दस्य गवार्थप्रत्यायने शक्त्यसम्भवः। वस्तुतः शब्दार्थ योरितरेतराध्यासिकतादात्म्यरूपो वाच्यवाचकभावसम्बन्ध एव तयोः स्वाभाविकी योग्यतेति व्यपदेश्या।

कारकनिमित्तत्वेनेन्द्रियाणि क्वचिदज्ञातार्थविषयकप्रतीतिमपि जनयेयुः। शब्दास्तु ज्ञापकनिमित्तत्वात् ज्ञातार्थविषयकप्रतीतिमेव जनयन्तीत्यनयोर्वैलक्षण्यम्। योग्यतारूपं शब्दार्थयोः सम्बन्धं निरूप्य पुनस्तयोरेव कार्यकारणभाव सम्बन्धमुपपादयत्याचार्यो यथा –

**शब्दः कारणमर्थस्य स हि तेनोपजन्यते।**
**तथा च बुद्धि विषयादर्थाच्छब्दः प्रतीयते।।**[8]

कश्चिद् वक्ता श्रोतारमुद्दिश्य कञ्चिच्छब्दं वदति। तदा श्रोतृश्रुतिविषयमनुप्राप्तः सोऽयं शब्दः तद्बुध्युपारूढः सन् तस्मिन् अपूर्वं कञ्चिदभिप्रायविशेषमर्थं जनयति। एवं वक्तृवक्तविनिर्गतः शब्दः कारणम्, श्रोतृबुद्ध्युपारूढोऽर्थः कार्यमित्यवसीयते। इत्थमेव कश्चिद्वक्ता निजमनसि कञ्चिदर्थं सङ्कल्पात्मना मन्वानः सन् तदनुरूपं शब्दं स्थानकरण व्यापारैरभिज्वलयति। तदा तन्मनोवर्ती सोऽयमर्थः कारणम्, शब्दस्तदीयकार्यमिति अवगम्यते। एवं शब्दार्थयोः परस्परं कार्यत्वं कारणत्वञ्चोपपन्नमिति हेतोरयमपि कार्यकारणभावसम्बन्धः तयोरितरेतराध्यासिकतादात्म्यरूप इत्येव विनिश्चेयः। वैय्याकरणमते शब्दार्थयोः स्वाभाविकसम्बन्धमन्तरा कृत्रिमः सामयिकः सम्बन्धो नोपपद्यत इति सोऽयं निषिध्यते। यथा –

**नित्येऽनित्येऽपि बाह्येऽर्थे पुरुषेण कथञ्चन।**
**सम्बन्धोऽतसम्बन्धैः शब्दैः कर्तुं न शक्यते।।**[9]

पदस्य जातिरूपे नित्यार्थे वा व्यक्तिरूपे अनित्यार्थे वा अगृहीतसङ्केतैः शब्दैः सम्बन्धो विधातुम् अल्पधिया पुरुषेण कथमपि न शक्यते। यदि केषुचिदर्थेषु शब्दानां सङ्केतः पुरुषेण कल्प्यते, तर्हि तत्र मूलक्षयहेतुरनवस्थादोषः सम्भवति। तादृगापत्तिनिवृत्यर्थमेव शब्दार्थयोः पूर्वोक्तः स्वाभाविकः वाच्यवाचकादिभावलक्षणः सम्बन्धः सर्वथा एषितव्यः। एतत्समर्थकं व्याडिवचनं यथा –

**सम्बन्धस्य न कर्तास्ति शब्दानां लोकवेदयोः।**
**शब्दैरेव हि शब्दानां सम्बन्धः स्यात् कुतः कथम्।।**

इत्थमनेन प्रकारेण शब्दार्थयोः सम्बन्धप्रसङ्गः यथामति ईषत्परिचर्चित इति शम्।

**सन्दर्भग्रन्थाः -**


1. *महाभारतम् – शान्तिपर्व। 47-47*
2. *वाक्यपदीयस्य पदकाण्डस्य द्रव्यसमुद्देशे - 5*
3. *वाक्यपदीयस्य ब्रह्मकाण्डे - 23*
4. *महाभाष्यस्य पस्पशाह्निकम् ।*
5. *कात्यायनवार्तिकम् – 1*
6. *वाक्यपदीयस्य पदकाण्डे - 3*
7. *तत्रैव - 29*
8. *तत्रैव - 32*
9. *तत्रैव –38*

# 16

# भारतस्यैकताधारं सीमावर्ति तीर्थम्

*शशिकुमारसिंहः*

अखिले विश्वे अतीवमनोहराऽस्ति यस्य संस्कृतिः, सुजला सुफला शस्यश्यामलाऽस्ति यस्य भूमिः, सर्वेषां प्राणीनां कृते यत्र क्रियते कल्याणाय कामना सः महानतमः देशोऽस्ति भारतवर्षः।

भारतवर्षस्य संस्कृतिः भारतीयसंस्कृतिः इति नाम्ना प्रसिद्धाऽस्ति। भारतीय- संस्कृतेः मौलिकं स्वरूपं संस्कृतभाषायामेव निबद्धमस्ति। संस्कृतभाषायां निगदिते विशालतमे संस्कृतसाहित्ये विहङ्गमदृष्टिनिपातेन एतत् ज्ञायते यत् मानवीयमूल्याधारिता यादृशी विवेचना अत्र विद्यते तादृशी अन्यत्र अतिदुर्लभा अस्ति। संस्कृतसाहित्यं भारतवर्षस्य एकतायाः अखण्डतायाः च विवेचनं विशद् रूपेण प्रतिपादयाति यतोहि भारतीयसंस्कृतौ सर्वत्र समष्टिभावनायाः एव दर्शनं प्राप्यते न तु व्यष्टेः। वैदिकसंस्कृतसाहित्ये सम्पूर्णस्य राष्ट्रस्य कल्याणार्थं एव प्रार्थना क्रियते -

**सं गच्छध्वं संवदध्वं सं वो मनांसि जानताम्**
**देवाभागं यथापूर्वे संजानाना उपासते।**
**समानीव आकूतिः समाना हृदयानि वः**
**समानमस्तु वो मनो यथा वः सुसहासति।।**[1]

अर्थात् सर्वे मिलित्वा चलेयुः, परस्परं मिलित्वा स्नेहपूर्वकं वार्तालापं कुर्युः वैचारिकरूपेण समानं भूत्वा ज्ञानस्य प्राप्तिं कुर्युः। पूर्वस्मिन् समये साधवः परस्परं सम्मिल्य देवानामुपासनां कुर्वन्ति स्म। सम्प्रतिकाले अपि जनाः सर्वे तथैव एकमानसाः समहृदयाः समविचाराः समसङ्कल्पाः भवेयुः। एकतायाः एतादृशी मङ्गलकामना प्राप्यते ऋग्वेदे।

पारस्परिकः एकतायाः अनुपमो आदर्श स्वरूपः यजुर्वेदस्य मन्त्रे दृश्यते-

**देहि मे ददामि ते नि मे धेहि नि ते दधे।**

**निहारं च हरासि मे निहारं निहराणि ते स्वाहा।।**[2]

इन्द्रदेवः यजमानं प्रति वदति यत् भवन्तः मह्यम् हविं दद्युः अहं युष्मभ्यम् उपयुक्तमपेक्षितं फलं प्रदास्यामि। निश्चयेन युष्माभिः अभीष्टं फलं प्राप्स्यते। अथर्ववेदे भ्राताभगिनीसर्वेषां कृते निर्देशितमस्ति यत् -

**मा भ्राता भ्रातरं द्विषन् मा स्वासारयुत स्वसा**

**सम्प्रपञ्च सव्रता भूत्वा वाचं वदत भद्रया।**[3]

भ्राता स्वसा परस्परं एकविचारं भूत्वा कस्मिंश्चदपि कार्ये स्वकीयं सहर्षं योगदानं दद्याताम्। परस्परं कल्याणकारकं वार्तालापं कुरूताम्। बृहदारण्यकोपनिषदि अपि एवमेव सर्वेषां कल्यायणस्य सुखमयजीवनस्य कामना क्रियते-

**सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।**

**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत्।।**[4]

संस्कृतसाहित्यस्य महनीये ग्रन्थे महाभारते तीर्थस्थानानां सुन्दरं वर्णनं प्राप्ते। अत्र भारतवर्षस्य एकतायाः प्रभूतमात्रायां वर्णनं कृतमस्ति। महाभारतस्य वनपर्वणि पाण्डवानां तीर्थयात्रावर्णने पुष्करतीर्थं तेषां तीर्थानां प्रधानतीर्थम् अस्ति।

सम्प्रति एतत् मन्यते यत् भारतवर्षस्य प्राचीनतमा सभ्यता 'सैन्धव-सभ्यता' इति आसीत्। एषा सभ्यता सिन्धुनद्याः तटे विकसिता जाता। तटाः ते सैन्धवप्रदेशः इति नाम्ना प्रसिद्धः। सैन्धवप्रदेशस्य भागौ द्वौ - उत्तरं दक्षिणं च। उत्तर भागः सिन्धु-सतलजयोः मध्ये स्थितं पञ्चानां नदीनां तटवर्ति स्थानम् अस्ति। एतदर्थम् एतत् पञ्चनद पञ्जाब इति नाम्ना प्रसिद्धम्। दक्षिणभागः सिन्धुसौवीरं इति कथ्यते। सैन्धवसभ्यतायाः किञ्चिद् वृहत्तरं क्षेत्रं सारस्वतप्रदेश इति कथ्यते। पश्चिमे सिन्धुसतलजयोः पर्यन्तं, उत्तरदिशि हिमालय पर्यन्तं, पूर्व दिशायां यमुनानदीपर्यन्तं दक्षिण-दिशायां नर्मदानद्याः पर्यन्तं सुविस्तृतं क्षेत्रं सारस्वतप्रदेश इति नाम्ना ज्ञायते। अस्मिन् प्रदेशे या सभ्यता विकसिता जाता। सा वर्तते सारस्वत-सभ्यता।

तस्याः सारस्वतसभ्यतायाः प्रणेता लोकपितामहः ब्रह्मा अस्ति एतस्मात् ब्रह्मासरस्वत्योः घनिष्ठतमः सम्बन्धे मन्यते। सरस्वती नदी आवर्षं न प्रवहति स्म। शरदृतौ एव केवलं सरस्वत्याः अविच्छिन्नधारा दृष्टिगोचरा भवति स्म।

सरस्वत्याः तात्पर्यमस्ति - सरोवराणां नदी सरस्वत्याः प्रवाहपथे यत्र-यत्र गम्भीरता आसीत् तत्र तत्र सरोवरं भवतिस्म। अन्येषु स्थानेषु जलानाम् अभावो आसीत्। एते सरोवराः एव कालान्तरे तीर्थम् इति रूपेण प्रसिद्धाः जाताः। सरस्वती दृषद्वत्योः नद्योः मध्यवर्ती सारस्वतप्रदेशः भूभागः 'ब्रह्ममवैवर्त' इति कथ्यते स्म। अस्मिन् ब्रह्मावर्ते महाराजः कुरुः वनं उच्छिद्य कृषियोग्यभूमिं निर्मितवान्। या भूमिः अनन्तरं कुरुक्षेत्रमिति नाम्ना प्रसिद्धा जाता।

तीर्थयात्रा जनानां कृते पापनाशका दुःखनाशका, सुखप्रदायका कामनापूरका च इत्यादि रूपेण स्वीक्रियते एव परन्तु तीर्थयात्रायाः वास्तविकं प्रयोजनं भवति भारतीयेषु एकतायाः जागरणम्। भारतवर्षस्य सीमान्तक्षेत्रे स्थितानि सन्ति अनेकानि तीर्थानि। भारतीय जनानां परस्परं तत आवागमनकारणात् तत्र भारतवर्षे एकतायाः बन्धनं इतोऽपि दृढ़तरं भवति। भारतस्यसीमावर्तिनः प्रमुखाणां तीर्थानां वर्णनमत्र प्रस्तूयत। भारतवासिनः अत्र आवर्षं आवागमनं भवति यस्मात् परस्परं एकतायाः भावना सहज एव विकसति।

**सिन्धुसागरसङ्गमः -** सिन्धुनदी यत्र अरबसागरे पश्चिमे भागे मिलति तत्र स्थितम् अस्ति भारतस्य एकं महत्त्वपूर्णं तीर्थम्। इदं वरुणतीर्थं इति नाम्ना प्रसिद्धम् अस्ति।

**सागरस्य च सिन्धोश्च संगमं प्राप्य भारत।**
**तीर्थे सलिलराजस्य स्नात्वा प्रयतमानसः।।**[5]

**सिन्धुसतलजसङ्गमः -** सिन्धुसतलजनद्योः सङ्गमः पश्चिमभारतस्य एका महत्त्वपूर्णा सीमा अस्ति। अत्रैव पञ्चनदतीर्थम् अपि विद्यते।

**अथ पञ्चनदं गत्वा नियतो नियताशनः**
**पञ्चज्ञानमवाप्नोति क्रमशो येऽनुकीर्तिता।**[6]

**झेलमनद्याः उद्गमः -** भारतस्य उत्तरभागे स्थिते कश्मीरक्षेत्रे अस्ति शेषनागझील इति। अस्मात् झीलतः एव झेलमनद्याः उद्गमः अभवत्। एतत् स्थानम् वितस्तातीर्थम् इति नाम्ना प्रसिद्धम् अस्ति। स्थानमेतत् कश्मीरं भारतस्य अभिन्नमंङ्गं सिद्धयति।

**वितस्तां च समासाद्य संतर्प्य पितृदेवताः**
**नरः फलमवाप्नोति वाजपेयस्य भारत।**
**काश्मीरेष्वेव नागस्य भवनं तक्षकस्य च**
**वितस्ताख्यमिति ख्यातं सर्वपापप्रमोचनम्।।**[7]

**सिन्धुनद्याः उद्गमः -** कैलाशपर्वते मानसरोवरस्य निकटे अस्ति सिन्धुनद्याः उद्गमस्थलम्। एतत् स्थानम् अस्ति भारतवर्षस्य सर्वाधिकायां महत्त्वपूर्णायां सीमायां एकम्। यत्र सिन्धु प्रभवतीर्थम् अस्ति।

**सिन्धोश्च प्रभवं गत्वा सिद्धगन्धर्वसेवतम्।**
**तदोष्य रजनीः पञ्च विन्देद् बहुसुवर्थकम्।।**[8]

**कैलाशतीर्थम् -** पूर्वस्मिन् समये कैलाशपर्वतं भारतवर्षस्य सर्वाधिका महत्त्वपूर्णा सीमा आसीत्। यस्य रक्षणं स्वयमेव भगवान् शंकरः करोति स्म।

**स पुत्रकामो नृपतिस्तप्यते स्म महत्तपः।**
**पत्नीभ्यां सह राजेन्द्र कैलासं गिरिमाश्रितः।।**[9]

**कामाख्यातीर्थम् -** कामाख्यातीर्थम् असमप्रदेशे ब्रह्मपुत्रनद्याः तटे स्थितम् एकमतिमहत्त्वपूर्णं स्थानमस्ति। यत् भारतवर्षस्य पूर्वोत्तरसीमां संकेतयति।

**कामाख्यं तत्र रुद्रस्य तीर्थं देवनिषेवितम्।**
**तत्र स्नात्वा नरः क्षिप्रं सिद्धिं प्राप्नोति भारत।**[10]

**गङ्गासागरसङ्गमः -** बंगालखाड़ी इति स्थाने गङ्गानदी सागरं प्राप्नोति। इदम् स्थानं भारतवर्षस्य अतिमहत्त्वपूर्णायां पूर्वीसीमायां एकमस्ति। इदं स्थानं गङ्गातीर्थम् इति रूपेऽपि प्रसिद्धमस्ति।

**गङ्गायाश्च तत्र राजेन्द्र सागरस्य च संङ्गमे।**
**अश्वमेधं दशगुणं प्रवदन्ति मनीषिणः।।**[11]

**महेन्द्रगिरिः -** उड़ीसाप्रदेशे सागरस्य तटवर्तिनि क्षेत्रे चिल्काझील इत्यस्य पार्श्वे महेन्द्रगिरिः तीर्थम् अस्ति। महेन्द्रगिरिपर्वते परशुरामतीर्थम् इति नामधेयः जलाशयोऽस्ति। इदं स्थानमपि एकं महत्त्वपूर्णं तीर्थम्।

**ततो महेन्द्रमासाद्य जामदग्न्यनिषेवितम्।**
**रामतीर्थे नरः स्नात्वा अश्वमेधफलं लभेत्।।**[12]

**कन्याकुमारी -** भारतीयमुख्यभूमेः दक्षिणतमे बिन्दौ स्थितमस्ति कन्याकुमारी। यत्र 'कन्यातीर्थ' नामधेयं तीर्थस्थानं वर्तते। अत्र सूर्योदयः सूर्यास्तं च उभे सागरे भव्यमाने दृश्येते।

**ततस्तीरे समुद्रस्य कन्यातीर्थमुस्पृशेत।**
**तत्रोयस्दृश्य राजेन्द्र सर्वपापैः प्रमुच्यते।।**[13]

**गोकर्णतीर्थम् -** कन्याकुमार्याः दक्षिणभागे सागरे विराजितमस्ति गोकर्णतीर्थम्। अत्रैव विवेकानन्दशिलाऽपि विद्यते। यत्र स्वामिना विवेकानन्देन

भारतस्य विशालतायाः महानतमो अनुभवो प्राप्तः आसीत्। रक्षा दृष्टया एतत् स्थानं कन्याकुमारीतः अपि अधिकं महत्त्वपूर्णम् अस्ति।

**अथ गोकर्णमासाद्य त्रिषु लोकेषु विश्रुतम्।**
**समुद्रमध्ये राजेन्द्र सर्वलोकनमस्कृतम्।।**[14]

**शूपरिकम् -** शूपरिकम् इदानीम् सिलवासा इतिनाम्ना प्रसिद्धम् अस्ति। अत्र परशुरामेण दीर्घकालपर्यन्तम् तपश्चर्याकृता आसीत्। भारतवर्षस्य दक्षिण-पश्चिमसीमायां स्थितं तीर्थमेतत् अति महनीयमस्ति।

**ततः शूर्पारकं गच्छेद् जामदग्न्यनिषेवितम्।**
**रामतीर्थे नरः स्नात्वा विन्द्पाद् बहुसुवर्णकम्।।**

**सरस्वतीसागरसङ्गमः -** यत्र सरस्वती नदी अरबसागरे मिलति स्म तत् स्थानं भारतस्य कृते अति महत्त्वपूर्णं विद्यते। पश्चिमसीमायां तीर्थमेतत् पूर्वस्मिन् काले प्रभाततीर्थमिति नाम्ना प्रसिद्धमासीत्।

**ततो गत्वा सरस्वत्याः सागरस्य च संगमे।**

**द्वारका -** गुजरातप्रदेशे काठियावाड़प्रायद्वीपस्य पश्चिमोत्तरः बिन्दुः द्वारकातीर्थः इति नाम्ना प्रसिद्धा आसीत्। अस्य अपरनाम द्वारक्वती अपि अस्ति।

उपर्युक्तानां सीमावर्तीनां तीर्थानां प्राकृतिकवर्णनेन एतत् प्रतीयते एतैः पुण्यतीर्थैः भारतभूमिः संरक्षिता अस्ति। एतेषु तीर्थेषु निवसनात् जनानाम् तत्र भ्रमणात् च भारतीयेषु एकतायाः अनुभूतिः सहजतया एव भवति।

**सन्दर्भग्रन्थाः -**


1. *ऋग्वेदः - 10/191/2-3*
2. *यजुर्वेदः - 3/50*
3. *अथर्ववेदः - 3/30/3*
4. *बृहदारण्यकोपनिषद् - 1/4/14*
5. *महाभारत-वनपर्वणि - 82/68*
6. *महाभारत-वनपर्वणि - 82/83*
7. *महाभारत-वनपर्वणि - 82/89-90*
8. *महाभारत-वनपर्वणि - 84/46*
9. *महाभारत-वनपर्वणि - 106/10*
10. *महाभारत-वनपर्वणि - 82/105*
11. *महाभारत-वनपर्वणि - 85-5*
12. *महाभारत-वनपर्वणि - 85-16*
13. *महाभारत-वनपर्वणि - 85/23*
14. *महाभारत-वनपर्वणि - 85/24*
15. *महाभारत-वनपर्वणि - 82/60*
16. *महाभारत-वनपर्वणि - 82/80*

# 17

# विशिष्टाद्वैतदर्शनस्यस्वरूपम्

*अखिलेशकुमारमिश्रः*

भारतीयास्तिकदर्शनपरम्परायां बहवोऽद्वैतसमर्थका आचार्याः विद्यन्ते, केचित्तु द्वैतसमर्थका आचार्याः, एवमेव केचिदाचार्याः विशिष्टाद्वैतम् अङ्गी-कुर्वन्तीति तु सर्वजनीनमेव। तत्र तावद्विशिष्टाद्वैतदर्शनं रामानुजसाम्प्रदायिकाः रामानन्दसाम्प्रदायिकाश्च समर्थयन्ति। अत्र चिदचिद्विशिष्टो ब्रह्मशब्द वाच्यो विष्ण्वाख्यो रामो नारायण एवैकं तत्त्वमिति विशिष्टाद्वैतदार्शनिकानां सिद्धान्तः समायाति। चिदचिद्विशिष्टं ब्रह्मैकमिति क्रोडीकृत्य भगवान्बादरायणः ''अथातो ब्रह्म जिज्ञासा''[1] इत्युपक्रम्य तमेव सप्रपञ्चं निरूपणं कृतवान् इति प्रतीयते।

विशिष्टाद्वैतशब्दस्यार्थस्त्वनेन प्रकारेण श्रीभगवदाचार्यपादैः विशिष्टाद्वैत दर्शनाख्ये ग्रन्थे प्रोच्यते - ''विशिष्टञ्च विशिष्टञ्च विशिष्टे इति द्वन्दसमासः। तयो र्विशिष्टयोरद्वैतं विशिष्टाद्वैतम्। द्वयोर्भावो द्वितैव द्वैतम्। न द्वैतमद्वैतम्। अद्वैतम भेदः। विशिष्टयोरद्वैतं विशिष्टाद्वैतमिति। अत्र सूक्ष्म चिदचिद्विशिष्टं कारणावस्थं ब्रह्म, तथा च स्थूलचिदचिद्विशिष्टं कार्यावस्थं ब्रह्म, तयोर्विशिष्टयोरद्वैतं विशिष्टा द्वैतमिति निर्गलितोऽर्थः। खल्वत्र पृथिव्यादिकं सर्वमचितत्त्वं ब्रह्मणः शरीर मित्यामनन्ति विशिष्टाद्वैतवादिनः सूरयः– ''यः पृथिव्या तिष्ठन्पृथिव्या अन्तरोयं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरोयमयति'' इतिश्रुतेः।[3]

ब्रह्म तावद्विकाररहितं कूटस्थं सर्वदैकं नित्यं भवति। अस्य ब्रह्मणः चित् अचित् चेति शरीरद्वयं परिकल्पयतेऽस्मिन्दर्शने। अत्र चिज्जीवः, अचित्तु प्रकृतिः। स्वेच्छया येन यदुपयुज्यतेतत्तस्य शरीरम्। चितः परमेश्वर पारतन्त्र्यात्परमेश्वरेण स्वेच्छयैवतस्या उपयोगः क्रियत इति स्वीकुर्वन्ति प्रकृतदर्शन समर्थकाः विपश्चितः। ईश्वरः स्वस्वकर्मानुरूपं जीवास्तत्तत्कर्मफलेषु नियोजयति। तत्र केन च जीवेन किं

कर्म कृतं तस्य फलं कियद् भोक्तव्यमिति तु सर्वतन्त्रस्वतन्त्रः परमकृपालुर्भगवान्नेव प्रमाणंनान्यः।

**तत्त्वत्रयविचारः -** तत्त्वविषये दार्शनिकानां नैकमतं दरीदृश्यते मायावादिनो वेदान्तिनः ब्रह्मैकमेव परमार्थतत्त्वं तद्भिन्ना मायाकल्पिता इति समामनन्ति। एवं महदादीनि पञ्चविंशतिस्तत्त्वानीति साङ्ख्याः। ईश्वराधिकानि तानि चेति षड् वंशतिस्तत्त्वानीति पातञ्जलाः। अथचपतिपशु पाशभेदेन त्रिविधं तत्त्वमिति पाशुपतशास्त्रमर्मज्ञाः नकुलीशाचार्याः शैवाश्च क्रोडीकुर्वन्ति। तथैवात्र विशिष्टा द्वैत दर्शने कियन्ति तत्त्वानि स्वीकृतानि विद्यन्ते इति जिज्ञासा प्रशमयन्नाह- वैष्णवमताब्जभास्करकारः -

**''पृष्टानामेकमाद्यं त्रिकमपि शृणु तद्भेदतो नामभेदैः -**
**नित्याऽज्ञाऽचेतना सा प्रकृतिरविकृतिर्विश्वयोनिश्शुभैका।**
**नानावर्णात्मिकाऽजा त्रिगुणसुनिलयाऽव्यक्तशब्दाभिधेया**
**निर्व्यापारा परार्था महदहमितिसूरुच्यते तत्त्वविद्भिः।।''[4] इत्यादिभिः।**

अथ च स्वामिश्रीभगवदाचार्येणापि प्रोच्यते- ''त्रीणि तत्त्वानि'' ''चिदचिद्ब्रह्मेति''।[5] अत्रेदमायाति त्रीणि तत्त्वानि सन्ति-चिदिति अचिदिति ब्रह्मेति च। पूर्वोक्तानामेषामेव त्रयाणां तत्त्वानां ज्ञानेन निःश्रेयससिद्धिर्जायत इति सिद्धान्ते न कामपि विप्रतिपत्तिं पश्यामः। तत्र प्रथमोपस्थिततत्त्वार्चित्तत्त्वं यथा शास्त्रं प्रदर्श्यते - तथाहि चिच्छब्दोऽत्र जीवस्यबोधकः। चिनुतेधर्मार्थकाममोक्षानीति चित्। चिनोति मुक्तिं साधनं भक्तिं प्रपत्तिमिति वाचित् अतः चित्पदेन जीव इति ज्ञायते। यथाचोक्तं श्रीभगवदाचार्यपादैः - ''चिज्जीवः'' इति। स च अजडद्रव्यरूपो भवति। जीवोऽजडद्रव्यविशेषोऽत्र गृह्यते। अजडस्तु चेतनः इति बोद्धव्यः। एतेषां दार्शनिकानां मते जीवो नित्यो भवति। अतएव जीव स्वरूपनिरूपणावसरेभगवत्पाद श्री रामानन्दाचार्यचरणाः भणन्ति -

**''नित्यो ज्ञश्चेतनोऽजः सततपरवशः सूक्ष्मतोऽत्यन्त सूक्ष्मो**
**भिन्नो बद्धादिभेदैः प्रतिकुणपमसौ नैकधा सूरिवर्यैः।**
**श्रीशाक्रान्तालयस्थो निजकृतिफलभुक्तत्सहायोऽभिमानी**
**जीवः सम्प्रोच्यते श्रीरघुपतिसुमते! तत्त्वजिज्ञासुवैद्यः।[7]**

अयमाशयः- चित् (जीवात्मा) तावन्नित्यः अल्पज्ञः अजः निरन्तरं परमेश्वरस्याधीनस्थः अणुपरिमाणकः, बद्धमुक्तादिभेदैरनेकरूपवान्, एवमेव प्रति-

शरीरभिन्नत्वात् नैकरूपवान्स्वकर्मफलभुक्, तथा अज्ञानवशात् देहादिषु अहङ्कारवान् स्वकृतकर्मं प्रति कर्ताऽहमित्यभिमानी च भवति चिदिति।

नन्वत्र कथं जीवो नित्यो भवितुमर्हति तस्य उत्पत्तिविनाशशीलत्वादिति न शंकनीयम्- प्रकृतदार्शनिकानां मते- ''यतो वा इमानि भूतानि जायन्ते''। इत्यादयस्तु जीवस्य देहसम्बन्ध उत्पत्तिः तद्वियोगो नाश इत्यनयारीत्या प्रतिपादितत्त्वात्। यथा चोक्तं श्री वैष्णवमताब्जभास्करटीकाकारेण' 'जीवोनित्यः अनादिनिधनः प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वरूप इति पूर्वानुभूतार्थ प्रतिसन्धानान्न जायते म्रियतेज्ञाज्ञौ, द्वावजावित्यादिश्रुतेश्च। किञ्च जीवानित्यत्त्वेऽकृताभ्यागमकृतविप्रणाशरूपदोषद्वयं प्रसज्येत। तथा च ब्रह्मसूत्रम्- नात्माश्रुतेर्नित्यत्वाच्च ताभ्य इति आकाशादिवज्जीवस्याप्युत्पत्ति रस्तीत्याशङ्क्य समाधीयते- नात्माऽश्रुतेः, नजीवात्मोत्पद्यते, नताहशी काचिदपि श्रुति- रस्ति यत्र जीवोत्पत्तिः श्रुतास्यात्प्रत्युत श्रुतिभ्यो नित्यत्वमेवावगम्यत इति तत्रानन्दभाष्यम्। नित्यत्वाद परिणामित्वमुच्यते, प्रकृतिवत्सतत परिणामैर्नान्वीयते। इमानिभूतानि जायन्ते, प्रजा असृजत, इत्यादि श्रुतयस्तु जीवस्य देह सम्बन्धोत्पत्तिस्तद्वियोगो नाश इति प्रतिपादनाभिप्रायेण नेयाः। एतेनात्मानित्यत्व- वादिनो निरस्यन्ते।''[8]

किञ्च श्रीभगवदाचार्योऽपि जीवस्वरूपं प्रतिपादयन्नाह - ''स चाजडद्रव्यरूपः, प्रत्यक्, अणुः, शेषः, कर्ता, फलभुक्, शरीरम्'', स्वयं प्रकाशश्चेत्यादिभिः सूत्रैः। अत्रप्रत्यक्त्वं तु स्वस्मै स्वेनावभासमानत्वम्। प्रत्यक्त्वमिदंजीवेश्वरयोरसाधारण धर्मः। शेषपदस्यात्रा स्वेच्छानुकूलविनियोगार्ह इति भावः। किञ्च विशिष्टाद्वैतवादिनां मते जीवानां त्रैविध्यं भवति। यथा चोक्तम्'' ''नित्यबद्धमुक्तभेदाज्जीवास्त्रि विधाः'' इति।

एतत्तु साम्प्रदायिकमेव। जीवज्ञानं सङ्कोचविकासार्हम्। येषां ज्ञानेषु न सङ्कोचो न हि विकासस्ते नित्याः। नित्यजीवज्ञानेषु यथा नास्त्यवकाशः संकोचस्य तथैव विकासस्यापि नावकाशः। भगवत्प्राप्तिरेव ज्ञानविकासस्य परमं फलम्। तत् प्राप्तिरेव मुक्तिः। ततो ज्ञानसङ्कोच इव ज्ञानविकासोऽपि न भवति।

नित्य जीवास्तावत् - अनन्त गरुड हनुमदादयः इत्यामनन्ति विशिष्टाद्वैतसमर्थकाः सूरयः। अथ बद्धजीवाः के इत्यत आह- अनिवृत्तसंसारा बद्धाः इति।[11] अर्थात्ये जीवाः स्वकृत कर्मणामीश्वरेच्छया फलभोगायस प्रदसप्रद्वासंस रन्तित एवात्रानिवृत्त

संसाराः एतल्लक्षणयुक्ता जीवा बद्धाइति व्यवह्तिो भवति प्रकृत दर्शने। मुक्त जीवास्तु सर्वाण्येव कृतानि कर्माणि निर्बीजानि कृत्वा भगवत्साक्षात्कारपरायणा एव भवन्ति। उक्तमपि च - 'तदतिरिक्ता मुक्ताः'[12] इति।

अथ अचित्तत्त्वं निरूप्यते - तथा हि - अत्राचित्पदेन प्रकृतिरित्युच्य-तेऽस्मिन्दर्शने। यथाचोक्तम् - ''अचिदेवप्रकृतिः'' इति न चिनोति किमपि स्वातन्त्र्येणेति अचित्। सा च प्रकृतिः सात्त्विकराजसतामस-गुणानामाश्रयः भवति। सा च प्रकृतिर्नित्याऽज्ञौचेतनानिर्व्या पारेत्यादिभिः शब्यते। तदुक्तम् – पृष्टानामेकमाद्यं ''इत्यादिना। उत्पादविनाशरहितत्त्वात् प्रकृतिः नित्या विद्यते। ज्ञानरहितत्त्वात् अज्ञा, चेतनाभ्यां जीवेश्वराभ्यां भिन्नत्त्वात् अचेतना जगतोऽस्योपादानत्त्वात्विश्वयोनिरिति कथ्यते। अथच स्वरूपत एकाप्यनेकरूपतया शोभमानतया एका शुभा च। त्रिषु गुणेषु सम्यङ्निलयः यस्या सात्रिगुणनिलया, कृतेर्ज्ञानेच्छा जन्यत्वेन तस्याश्च जडत्वात्स्वतन्त्रतया व्यापार रहित त्त्वेननिर्व्यापारा, तथापि स्वप्रवृत्त्यापरस्यपुरुषस्य भोगापवर्गौ भवत इत्यत आह परार्था इति। एवमेव महदहङ्कारक्रमेण सर्वमपि सा समुत्पादयति अतएवाह महदहमितिसूः' इति।

साचप्रकृतिः नित्यत्वात् अक्षर शब्दवाच्या भवति। ज्ञान विरोधित् वात् अविद्या शब्दवाच्या। एवमेव विचित्रसृष्टिकारणत्वात् मायेति शब्देनापि व्यवह्रियते - तदुक्तम्-अक्षरा विद्या माया शब्द वाच्यापि'' इति अस्याः प्रकृतेरपरन्नामाव्यक्त मिति भवति। अत्राव्यक्तपदेन भगवत्सङ्कल्पाधीनगुणवैषम्यात्कार्योन्मुखावस्थेति स्वीकुर्वन्ति शास्त्रविदः। यथा चोक्तम् ''कार्योन्मुखावस्थाऽव्यक्तम्''[16] इत्यस्मादेव चाव्यक्तान्महत्तत्त्वञ्जायते। तदनन्तरमेव चराचरस्यास्य जगतः समुत्पत्तिरिति।

अथेदानीं प्रकृत दर्शनस्य तृतीयं ब्रह्मतत्त्वं निरूप्यते–

सृष्टिं बृंहयति वर्धयतीति ब्रह्म। बृंहणं तावदुत्पत्तिपूर्वकमेव भवति। अतोऽत्र सृष्टिकर्तृत्वं ब्रह्मणि समायाति। अत एव च जन्माद्यस्य यत इति सङ्गच्छते। एतदेव ब्रह्म परमेश्वरशब्देन ईश्वरशब्देन परमात्मादिशब्देनापि शास्त्रेषु व्यवह्रियते। यथाचोक्तम् -

''तदेवेश्वरपरमेश्वरपरमात्मादिशब्दवाच्यम्''[17] इति।

''ब्रह्मेति परमात्मेति भगवानिति शब्द्यते''[18] इति च।

अस्य ब्रह्मणः स्वरूपं प्रतिपादयन्नाह - भगवानूरामानन्दाचार्यः -

विश्वञ्जातं यतोऽद्धा यदवितमखिलं लीयते यत्र चान्ते
सूर्यो यत्तेजसेन्दुःसकलमविरतं भासयत्येतदेषः ।
यद्भीत्या वाति वातोऽवनिरपि सुतलं याति नैवेश्वरोज्ञः
साक्षी कूटस्थ एर्को बहुशुभगुणवानव्ययो विश्वभर्ता''[19] इति ।

**सन्दर्भग्रन्थाः -**


1. *ब्रह्मसूत्रम्, 1/1/1*
2. *विशिष्टाद्वैतसिद्धान्तः, 1/1/1 सू. व्याख्याया ।*
3. *बृहदारण्यकोपनिषद् , 14/6/7/7*
4. *वैष्णवमताब्जभास्करः 6 श्लो.*
5. *विशिष्टाद्वैतदर्शनम् 1-1-3/4*
6. *विशिष्टाद्वैतदर्शनम् 1-1-5*
7. *वैष्णवमताब्जभास्करः - 7 श्लो.*
8. *श्रीवैष्णवमताब्जभास्करः पदपरामर्शटीका पृ.24*
9. *विशिष्टाद्वैतदर्शनम् 1/1/6-13*
10. *विशिष्टाद्वैतदर्शनम् 1/2/1*
11. *विशिष्टाद्वैतदर्शनम् 1/2/2*
12. *विशिष्टाद्वैतदर्शनम् 1/2/3*
13. *विशिष्टाद्वैतदर्शनम् 2/1/2*
14. *श्रीवैष्णवमताब्जभास्करः 6 'लो.*
15. *विशिष्टाद्वैतदर्शनम् 2/1/5*
16. *तदेव, 2/1/6*
17. *विशिष्टाद्वैतदर्शनम्, 3/1/2*
18. *श्रीमद्भागवतमहापुराणम् -1/2/11*
19. *श्रीवैष्णवमताब्जभास्करः 8 श्लो.*

# 18

## ग्रन्थसमीक्षणम्
### मानवीसंस्कृते बालोपन्यासः

*पूर्णचन्द्रउपाध्यायः*

हिन्दी भाषानुवादसंवलितः 229 पृष्ठात्मकोऽसौ सुखान्तकः बालोपन्यासः मानवीतिसार्थकनामधेयायाः कस्याश्चित् हंसिन्याः महनीयमुदात्तं च चरितमवलम्ब्य प्रस्तौति सांस्कृतिक प्राकृतिकपर्यावरणचेतनयोः अपूर्वं समन्वयम्। तिर्यग्योन्याः हंसिन्याः मानव्याः मानवीकरणं त्रिपाठीमहोदयानां सर्वथा अनन्यं प्रातिभ्यम्। बालोपन्यासोऽसौ न केवलं बालानां हृदयाह्लादकारित्वम् अपितु आबालवृद्धवनितानां समस्तानां चेतोविनोदनकारित्वं भजते इतिवैशिष्ट्यमस्य अद्वितीयम्। उपन्यासकारेणात्र मानवीयजीवनमूल्यबोधेन सह संपूर्णजैविकमूल्यबोधः लीलया प्रतिपादयिशितः। क्षुधापीडितस्य पितृरहितस्य बालकस्य रघोः आकिशोराद्यौवनम् आर्थिकप्रगतिपुरस्सरं व्यक्तित्वनिर्माणार्थ कायगतच्छायेवमानव्याः यः त्यागः स तु मानवीयसंवेदनामपि अतिशेते। नैतावन्मात्रम्, कलानाथस्य तत्प्रेमिकया सहमिलन मपिमानव्यालीलया सम्पादितम्। मानव्याः कुशलनटस्येव अभिनयकरणं, मनुष्यवाचासम्भाषणं च पाठकहृदयरंजकत्वं भजेते। तदेतस्मात् संवेदनात्मक परोपकृतिकारणादेव अन्तिमपर्याये प्रकृतिरपि स्वतः मानवीं बहुप्रतीक्षिते नतदीयप्रियेण अनन्तनामधेयेन हंसेन साकं मेलयतिइति लेखकस्य जीवन दर्शान मात्र सुष्ठुप्रतिफलति। अपि च मानव्याः रघोरश्च परस्परं निश्छलः स्नेहः सर्वथा अलौकिक एव। उपन्यासेऽस्मिन् प्राकृतिकपर्यावरणप्रदूषण जन्यपरिणतिंप्रतिरचयितुश्चेतसि द्योतते गभीरा चिन्ता। दिङ्मात्रं यथा- ''हिमालयः परिवर्तितः। तत्र जनाः आरोहन्ति, नानावस्तूनिप्रक्षिपन्ति। क्वचिद् दुर्गन्धः, क्वचित् खाद्यवस्तूनि। हिमं द्रवितम्। तेन क्लेशः।'' (मानवी पृ.सं.107)

संवादात्मकशैल्या विरचितेऽस्मिन्नुपन्यासे लेखकेन बहुत्र टैक्सी, पादयामः, ट्रकं, शरकषकम्पनी, फार्महाउसं, मोटरसाइकिलं, ट्रेक्टरः, कारयानं, होटलं, मामाजीः, बाबूजीः, अधक्कयत्, डब्डबायिते, अढौकयत्, इत्यादीनां सुबन्तानां तिङन्तानां च परम्परा व्यतिरिक्तानां पदानामभिनवानां प्रयोगेण सुरभारतीकोषसंवर्धनपुरस्सरं प्रतिपादयिषितं स्वकीयमभिनवत्वम्।

गुणावगुणप्रदर्शनेन एव जायते सुष्ठु ग्रन्थसमीक्षणमिति धिया एव उपन्यासस्यास्य प्रकाशितकलेवरेक्वचित् प्राप्तस्थानकाः टङ्कणगताः स्खलिताश्चदोषाः निरादरणीयाः इतिकेचन अत्र उपस्थाप्यन्ते। जिग्मिषन्तं, पक्षीणां, दशवादनगामनि, सहसाः, अभात्, इत्येवंप्रकारकाः प्रयोगाः ननु चिन्त्याः। यद्वा भवतु नाम समसामयिक पर्यावरणानु शासन दृष्ट्या पाठक मनोविनोदनपरोऽसौ उपन्यासः संवेदनाप्रधानत्वाद् उत्तमकोटिक इति निश्चप्रचम्।

मानवी (संस्कृते बालोपन्यासः), प्रणेता-आचार्यराधावल्लभत्रिपाठी, शिवालिक प्रकाशनम्, 4648/21, अंसारीरोड, दरियागंजः, नवदेहली- 110002, मूल्यम्-495 रूप्यकाणि।

# 19

## ग्रन्थसमीक्षणम्

### अनुवाक्

***नौनिहालगौतमः***

लेखकः आचार्यः कृष्णकान्तचतुर्वेदी जबलपुरविश्वविद्यालयस्य पूर्व-संस्कृतविभागाध्यक्षः। ग्रन्थस्य नामकरणमेकस्य निबन्धस्य 'अनुवाक्' इत्यस्य आधारेण कृतम्। ग्रन्थे सङ्कलितनिबन्धेषु विषयवैविध्यमस्ति। ग्रन्थोऽयं भारतस्य प्राचीनज्ञानानां, परम्पराणां, साहित्यिक वैभवस्य, दार्शनिकोदात्ततायाः परिवेशस्य च संक्षेपेण निदर्शनं प्रस्तौति। प्राचीनविवरणानां संस्कृते विद्यमानत्वाद् ग्रन्थस्य तथ्यानि संस्कृतमाश्रयन्ते। लेखकेन एते निबन्धाः स्वकार्यक्षेत्राज्जातस्य साक्षात् अनुभवस्याधारेण विरचिताः येन विषयवस्तुनः प्रामाणिकता विश्वसनीया जाता। लेखकस्य मन्तव्यं यत् प्राचीनभारतीयज्ञानं वर्तमानेऽपि प्रासंगिकमुपयोगि चास्ति, उदारदृष्ट्या तदनुशीलनीयम्। लेखको रूढिं नाश्रयते, अपितु परम्पराः प्रगतिवादिचिन्तकरूपेण निरूपयति।

लेखकः समसामयिकसमस्यानां निराकरणाय पारम्परिकज्ञानस्योपयोगं कर्तुं वाञ्छति। प्रत्येकं निबन्धस्य 4-6 पंक्तिषु निष्कर्षः प्रदत्तः यो निबन्धस्यावबोधे नितान्तमुपयोगी अस्ति।

कालिदासमवलम्ब्य 3 निबन्धाः, राजशेखरमाश्रित्यैको निबन्धः, भारतीय-संस्कृतिमाश्रित्य 3 निबन्धाः सन्ति। लेखकः संस्कृतिं संस्कृताश्रितां मनुते, नैतिकताविहीनतां यान्तं देशं प्रति चिन्तां प्रकटयति। भारतीयसंस्कृतिः कुलजातिधनविद्यापेक्षया चरित्रं श्रेयस्करं स्वीकरोति। विभिन्नसंस्कृतीनां श्रेष्ठोपादानैः निर्मिता सशक्ता भारतीयसंस्कृतिः विपरीतपरिस्थितिष्वपि सुस्थिरा वर्तते। भारतीयसंस्कृतिः सहिष्णुतासमन्वययोः उदाहरणमस्ति। ईको-नारसिसयोः

ग्रीकमिथकस्योल्लेखः लेखकस्य अध्ययनक्षेत्रस्य व्यापकतायाः परिचायकः। 'संस्कार' निबन्धः जीवने मूल्यानां महत्त्वं निरूपयन् मानवोदात्तीकरणाय संस्काराणामनिवार्यत्वं ज्ञापयति। वागर्थयोः भारतीय परम्परायां मान्यतां निरूपयति निबन्धः 'वागर्थ'इति। यथा - 'प्रयत्न करने पर भी उस (वाक्) का सर्वांग निरूपण सम्भव नहीं है। यही उसके विमर्श का वैशिष्ट्य है और सीमा भी।' (अनुवाक् पृ. 69)

दशमो निबन्धः - 'अनुवाक्'। अनुवाक् अर्थात् वाक्तत्त्वस्यानुगमनम्। विगतसहस्राब्दीनां विवरणं वाचि संरक्षितमस्ति। तत् श्रेयसः प्रेयसश्च संस्करणानां आश्रयाभिलेखः। पुरातनीयविभिन्नमहत्त्वपूर्णोपलब्धयः वाक्तत्त्वस्यानुरणनद्वारा प्राप्ताः। 'राधाभावसूत्रपीठिका' इतिनिबन्धः स्वामिदेवमित्रनन्दगिरिविरचितस्य राधाभावसूत्रग्रन्थस्य (108 सूत्राणि) परिचयात्मक पीठिकास्ति। 'भारतीय सौन्दर्यशास्त्र तथा आधुनिक बोध' निबन्धे वेदादारभ्य आचार्यराधावल्लभ त्रिपाठिपर्यन्तं भारतीयपरम्परायां कृतायाः सौन्दर्यविषयकचर्चायाः दिङ्मात्रेण प्रस्तुतिरस्ति। 'लेखन कला का विकास'निबन्धः संक्षेपेण पाण्डुलिपिविज्ञान-स्यास्वादं कारयति। 'काल की अवधारणा' निबन्धे वेदे प्राप्तस्य कालस्वरूपस्य, कालप्रकाराणां, कालगणनायाः, ज्योतिषस्य, संगीतस्य, अनुष्ठानादिभिः कालसंबंधस्य, कालमापकघटीनाञ्चोल्लेखोऽस्ति। 'काश्मीर शैव आगम' निबन्धे शैव-शक्त-वैष्णव-बौद्ध-जैनागमानामुल्लेखं कुर्वन् लेखकः कश्मीरे प्रचारितानां सर्वात्मकभावाश्रितानां षडागमानां वर्णनं कुरुते। 'महायान और वैष्णवागम में भक्ति' निबन्धे महायान-वैष्णवागमयोः परस्परं समानतायाः, प्रभावस्य, समन्वयस्य ऐक्यस्य च निरूपणे लेखकस्य प्रवृत्तिरस्ति। 'मध्व-वेदान्त में पर-तत्त्व विष्णु' निबन्धे दार्शनिक परम्पराणां पक्ष-विपक्षान् तर्कपूर्णरीत्या स्थापयन् लेखको मध्ववेदान्तस्य सिद्धान्तं भारतीयदर्शनप्रस्थानस्य महत्त्वपूर्णामुपलब्धिं स्वीकरोति। 'संस्कृत साहित्य में चेदिदेश और त्रिपुरी' निबन्ध एतयोः नगर्योः परिचयः, संस्कृति-सभ्यता-स्थापनायां योगदानं च प्रस्तौति। ग्रन्थस्य लघुतमे 'अग्निपुराण' निबन्धे ग्रन्थकारः पुराणमिदं विभिन्नविषयाणां ज्ञानमद् विश्वकोषं कथयति। 'वराहकथा' निबन्धो वराहावतारकथाया विकासक्रमं महत्त्वं च प्रकटीकरोति। जबलपुरवासी लेखको जनजातीनां संस्कृति-परम्परा-धार्मिक विश्वास-क्षेत्रैतिहासिक-तथ्य-लोककथानां प्रत्यक्षं ज्ञानं दधाति। ज्ञानमिदं लेखकेन 'नर्मदा

घाटी की जनजातीय संस्कृति’ निबन्धे निबद्धं, तच्च नितान्तमुपादेयम्। ‘फ्रेडरिक मैक्समूलर’ निबन्धे जर्मनदेशीयसंस्कृतविदुषः मैक्समूलरस्य परिचयः, तदुपरि संस्कृतज्ञानप्रभावः, तद्विषये विवेकानन्दविचाराः च प्रस्तुताः।

निबन्धानां क्रमे असम्बद्धतास्ति। अतः विषयवस्तुप्रवाहे बाधाऽनुभूयते। हिन्दीभाषायां निबद्धेऽस्मिन् ग्रन्थे संस्कृतोद्धरणानां बाहुल्यमस्ति येन असंस्कृतज्ञाः पाठकाः किञ्चित् काठिन्यमनुभवन्ति।

विषयाणां वैविध्येन विशिष्टेऽस्मिन् महत्त्वपूर्णग्रन्थे भारतीयपुरातनस्य नैकेषामायामानां समुचितसामग्री निर्दशनरूपेण विद्यते। असंस्कृतज्ञोऽपि पाठकः संस्कृते निहितस्य अनुपमनिधेः संक्षेपेण परिचयं प्राप्तुं शक्नोति, नितरामुपयोगी पठनीयोऽयं ग्रन्थः।

अनुवाक् (23 निबन्धानां सङ्ग्रहः), लेखकः आचार्यः कृष्णकान्त चतुर्वेदी, प्रस्तुतिकर्तारौ श्रीमती डॉ. चन्द्रा चतुर्वेदी तथा राजेश पाठकः ‘प्रवीण’, भाषा- हिन्दी, प्रकाशकः यश पब्लिशर्स एंड डिस्ट्रीब्यूटर्स दिल्ली, प्रथमं संस्करणम् 2017 ई., कुल पृष्ठ संख्या 156, मूल्यम्- 395 रूप्यकाणि।

# लेखकपरिचयः


| | |
|---|---|
| रामसुमेरयादवः | - पूर्वाध्यक्ष, संस्कृत तथा प्राकृतभाषाविभागः, लखनऊविश्वविद्यालयः लखनऊ - 226007 |
| प्रभातकुमारसिंहः | - सहायकाचार्यः,संस्कृतविभागः राजकीय स्नातकोत्तर महाविद्यालयः चुनारः, मीरजापुरम् उत्तरप्रदेशः |
| किरण आर्या | - असि. प्रोफेसरः संस्कृतस्य, डॉ. हरीसिंहगौर विश्वविद्यालयः सागरम् (म.प्र.) |
| सञ्जयकुमारः | - सहायकाचार्यः संस्कृतविभागः डॉ. हरीसिंहगौरविश्वविद्यालयः सागरम् (म.प्र.) 470003 |
| नौनिहालगौतमः | - सहा. आचार्यः, संस्कृत विभागः, डॉ. हरिसिंहगौर केन्द्रीय विश्वविद्यालयः, सागरम् (म.प्र.) 470003 |
| पूर्णचन्द्र उपाध्यायः | - सह-आचार्यः स्नातकोत्तरसंस्कृतविभागाध्यक्षश्च राजकीयमहाविद्यालयः बून्दी (राज.) |
| आशा सिंह रावत | - असिस्टेण्ट प्रोफेसरः संस्कृत विभागः शासकीयः कमलाराजाकन्या स्नातकोत्ररः महाविद्यालयः ग्वालियरम् (मध्यप्रदेशः) |
| हेमन्त शर्मा | - सहायकप्राध्यापकः संस्कृतसाहित्यम् शासकीयसंस्कृतमहाविद्यालयः, रायपुरम् (छ.ग.) |
| रहसबिहारी द्विवेदी | - 615, ग्रीन सिटीमाढ़ोतालम्जबलपुरम्, म.प्र. |
| तरुणकुमारशर्माः | - सहायकाचार्यः, संस्कृत विभागे अतर्रापरास्नातक महाविद्यालये अतर्रा, बाँदा |
| बाबूलालः मीना | - सहाचार्यः संस्कृत-विभागः एम. एस. जे. राजकीयः स्नातकोत्तरः महाविद्यालयः भरतपुरम् (राजस्थानम्) |

| | |
|---|---|
| राघवेन्द्र शर्मा | - संस्कृतसाहित्यविभागाध्यक्षः सहायक प्राध्यापकश्च, शासकीय दू. श्री. वै. संस्कृत महाविद्यालयः, रायपुरम् (छ.ग.) |
| रामहेतगौतमः | - सहायक-प्राध्यापकः, संस्कृत-विभागे, डॉ. हरीसिंहगौर विश्वविद्यालयः, सागरम् मध्यप्रदेशः। |
| दयानिधिशर्मा | - सहायक प्रोफेसर, शिक्षाशास्त्र विभाग केन्द्रीयसंस्कृतविश्वविद्यालयः राजीवगाँधीपरिसर, मेणसे, शृंगेरी जि. चिक्कमगलूरु, कर्नाटकम् - 577139 |
| सूरे रामतिरुमलरेड्डिः | - शोधच्छात्रः, साहित्यविभागः, राष्ट्रिय संस्कृत विश्वविद्यालयः, तिरुपतिः। |
| शशिकुमारसिंहः | - सहायकाचार्य, संस्कृत विभागः, डॉ. हरीसिंह गौर विश्वविद्यालय सागर |
| अखिलेशकुमारमिश्रः | - अतिथि व्याख्याता, संस्कृत विभाग, रानीदुर्गावती विश्वविद्यालय, जबलपुर (म.प्र.) |